**विहाय योगान् विषमेषुविद्धं मनो मुनेस्तस्य मरुत्तरुण्याम् ।**
**आसक्तिमापद्यत कौशिकस्य मनोहरायामिव मेनकायाम् ।। ३४ ।।**

जिस तरह विश्वामित्र का मन योग को छोडकर मनोहर मेनका में आसक्त हो गया था, उसी तरह काम के तीरों से बिंधा हुआ भार्गव का मन भी योग को छोडकर इस देवाङ्गना में आसक्त हो गया ।। ३४ ।।

**सा गर्भमाधत्त मुनेस्सुरस्त्री सुदर्शनांशेन तदानुविष्टम् ।**
**पपात गर्भो भुवि तैष्यमासे मखाभिधाने महनीयतारे ।। ३५ ।।**

उस देवाङ्गना ने भार्गव से गर्भधारण किया । तब उस गर्भ में सुदर्शन भगवान् का ही अंश प्रविष्ट हुआ था। वह गर्भ पौष महीने के मखा नक्षत्र में भूमि पर गिरा ।। ३५ ।।

**निक्षिप्य तस्यान्तिकवेत्रगर्ते गर्भं तमुल्बावृतमुल्बणाभम् ।**
**यथागतं दिव्यवधूर्जगाम मुनिश्च तीर्थाभिनिषेवणाय ।। ३६ ।।**

वह अप्सरा देपीप्यमान एवं जेर से ढके हुए उस गर्भ को भार्गव के इस स्थान के समीप के बेत के गड्ढे में फेंक डाला और जैसे आयी थी वैसे ही चली गयी और भार्गव मुनि भी तीर्थाटन के लिए चल दिये ।। ३६ ।।

**गर्भस्स कालेन विभिद्य पेशीं गर्ते गरुत्मानिव डिम्बरूपः ।**
**स्तन्याभिलाषेण ततः क्षुधार्तः स्वैरं व्यरोदीद्विजने प्रदेशे ।। ३७ ।।**

वह समय आने पर पेशी फोड कर बाहर निकल आया जैसे बालक गरुड अपने समय पर पेशी को फोड कर वाहर निकल आये थे । जन्मते वच्चे को भूख बडी लगती है इसे भी भूख लगी जिससे उसी बेत के गड्ढे में पडा पडा रोने लगा । इस निर्जन स्थान में रोने से रोकने-वाला तो कोई था ही नहीं, इससे इसके रोने में कोई अडचन भी न पडी, स्वच्छन्द रोता रहा ।। ३७ ।।

**नाथो महीसारपुरस्य विष्णुर्बालं रुदन्तं तमुपेत्य तत्र ।**
**कटाक्षपातैः करुणामृतार्द्रैः आप्याय्य सद्योऽन्तरधात्स भूयः ।। ३८ ।।**

महीसारपुर के नाथ विष्णुभगवान् रोते हुए उस बालक के पास आ गये, करुणा के अमृत से भीगे हुए अपने कटाक्षपात उस बालक पर करके शीघ्र ही अन्तर्धान हो गये। जिससे उसकी भूख मिट गयी और उसका रोना वन्द हो गया ॥ ३८ ॥

स्तनन्धयस्तद्विरहासहिष्णुः भूयोऽप्यरोदीत्स यथाऽञ्जनेयः।
तत्रागता वेत्रविलावहेतोः तज्जीविनश्शुश्रुवुरार्त्तनादम् ॥ ३९ ॥

यह वालक भगवान् के विरह को न सह सका, हनुमान्जी की तरह फिर भी रोने लगा। वहां कुछ वेंत की डाली आदि बनानेवाले और उसीके द्वारा अपना जीविका-निर्वाह करनेवाले लोग आ गये और उस वच्चे का करुण रोदन सुनने लगे ॥ ३९ ॥

बैडालमाशङ्क्य रवं तदीयं स्वभाषया पाक इति ब्रुवाणाः ॥
ते गर्तमागत्य शिशुं विलोक्य संगृह्य पाकाह्वयमेव चक्रुः ॥ ४० ॥

वे इस वालक की आवाज को बिल्ली की आवाज समझ कर अपनी भाषा में 'पाक' यह कहते हुए उस वेत्र के गर्त में आये तो वहां उन्होंने वच्चे को देखते ही गोद में उठाकर 'पाक' नाम रख दिया ॥ ४० ॥

नीत्वा गृहं भार्गवमाशु तं ते प्रादुर्वधूभ्यः परिपोषणाय।
अवर्धयन्नानकदुन्दुभिं ताः गोप्यः पुरा नन्दकुले यथैताः ॥ ४१ ॥

उन्होंने उस भार्गवीय को शीघ्र ही घर लाकर लालन-पालन करने के लिए अपनी वहुओं को दे दिया। पहले जैसे नन्दकुल में गोपियों ने भगवान् को पाल-पोसकर सयाना किया था, उसी तरह ये सव इस भार्गवीय को भी लालन-पालन करके वडा करने लगी ॥ ४१ ॥

उवास तत्रैव जनार्दनस्य दयासुधास्वादनवर्धमानः।
स्तन्यादिभोज्येषु निराश एव न वाचमूचे न रुरोद वालः ॥ ४२ ॥

ये स्तन का दूध तथा और कुछ भी नहीं पीते थे तथा न कुछ खाते ही थे एवं न बोलते और रोते थे। वेत्रगर्त्त में सब से पहले रोती वार

जो भगवान से कृपाकटाक्ष का पान किया था, उसी समय के पीये हुए कृपाकटाक्षरूपी अमृत से ये बढते थे और वहीं रहने लगे ॥ ४२ ॥

**सुपर्वकान्तोदरलब्धजन्मा यथैव मैत्रावरुणिस्स बालः ।**
**ज्ञानोदयप्राप्तसमस्तकामः भस्मावृतो वह्निरिवास्त तत्र ॥ ४३ ॥**

जैसे उर्वशी के गर्भ से उत्पन्न होनेवाले वसिष्ठजी जन्म से ही पूर्ण ज्ञानी होने के कारण सबसे निस्पृह थे, उसी तरह वह बालक भी ज्ञान के उदय से समस्त इच्छित पदार्थों को प्राप्त था और जैसे राख में अग्नि ढकी हुई हो उसी तरह वहां ढका हुआ था ॥ ४३ ॥

**ततो महीसारपुराधिवासो प्राज्ञो महान् कश्चन शूद्रवृद्धः ।**
**श्रुत्वाऽद्भुतं तस्य शिशोरुदन्तं द्रष्टुं तमायात्तनयेन रिक्तः ॥ ४४ ॥**

इसके बाद महीसारपुर का रहनेवाला परम बुद्धिमान् और वृद्ध शूद्र व्यक्ति उस बच्चे का अद्भुत वृत्तान्त सुन कर देखने के लिए चला आया । इस शूद्र के कोई लडका नहीं था ॥ ४४ ॥

**प्राप्यालयं शूर्पकृतस्स बालसनाथितं क्षीरमयोपहारः ।**
**दृष्ट्वा शिशुं तत्र चतुर्थवंश्यो विसिस्मये दिव्यमहोनिधानम् ॥ ४५ ॥**

जिस सूर्प बनानेवाले के घर को यह अद्भुत बालक शोभित कर रहा था उसी घर को दूध की भेंट हाथ में लिये हुए वह वृद्ध शूद्र भी पहुंच गया । वह शूद्र बालक को देखकर बडा विस्मित हुआ । यह बालक अलौकिक तेज का निधान था ॥ ४५ ॥

**पयः पिबेत्यात्मसमर्पितं तमयाचताङ्घ्र्योः प्रणमन् स भक्त्या ।**
**स पूरयिष्यन्नभिलाषमस्य पीत्वा पयस्तं विससर्ज भूयः ॥ ४६ ॥**

उसने जाते ही भार्गवीय के चरणों में भक्ति के साथ प्रणाम करके 'मेरे लाये हुए दूध पीओ' यह कह कर प्रार्थना की । भार्गवीय ने उस शूद्र की इच्छा को पूरा करने के लिए उसका दूध पीकर छोड दिया ॥ ४६ ॥

**एवं स वृद्धः कतिचिद्दिनानि पयःप्रदानात् परितोष्य सम्यक् ।**
**अभ्येत्य तं वृद्धवधूसमेतः कदाचिदस्मै प्रददौ पयस्तत् ॥ ४७ ॥**

इसी प्रकार उस वृद्ध शूद्र ने कुछ दिनों तक बालक भार्गवीय को दूध पिला-पिला भले प्रकार सन्तुष्ट करके एक दिन अपनी स्त्री के साथ आकर दूध का कटोरा उसे दिया ॥ ४७ ॥

**पुत्रार्थिनौ तौ मनसा विदित्वा ताभ्यां ददौ पीतपयोऽवशेषम् ।**
**पीत्वा पयस्तत्तरुणावभूतां तौ दम्पती गर्भमधाच्च शूद्री ॥ ४८ ॥**

भार्गवीय ने अपने मन से पुत्रार्थी समझकर उनके लाये हुए दूध को थोडा पीकर शेष उन दोनों को दे दिया जिसे पीकर दोनों ही युवा हो गये, पीछे शूद्रा ने गर्भ धारण कर लिया ॥ ४८ ॥

**काले गते सा हरिभक्तिभाजं प्रासूत शूद्री सुधियं कुमारम् ।**
**तेजस्विना तेन रराज शूद्रा यथा हि माता विदुरेण पूर्वम् ॥ ४९ ॥**

उस शूद्री ने गर्भ का समय पूरा हो जाने पर अच्छी वुद्धिवाले परम भागवत कुमार को उत्पन्न किया। वह शूद्रा इस तेजस्वी पुत्र से इस तरह शोभायमान हुई जैसे पहले विदुर की माता विदुर से सुशोभित हुई थी ४९

**चकार नाम्ना कणिकृष्णमेनं अशिक्षयत्सर्वकलाश्च तातः ।**
**सोऽप्याचरन् भार्गवपादसेवां मुकुन्दभक्तिप्रवणो बभूव ॥ ५० ॥**

शूद्र के जो पुत्र उत्पन्न हुआ इसका नाम कणिकृष्ण रखा गया। इसके पिता ने इसे अपनी सव विद्याएं सिखायीं। यह भी भार्गवीय के चरणों की सेवा में लग गया और भगवान् की भक्ति के रसास्वादन में तत्पर हो गया ॥ ५० ॥

**स भार्गवीयो भगवत्कटाक्षदयासुधास्वादनतृप्तचेताः ।**
**समुज्झिताहारपयोऽभिलाषः कुले मुदावर्धत वैत्रिकाणाम् ॥ ५१ ॥**

भगवान् ने बेंत के गड्ढे में रोते हुए भार्गवीय पर जो कृपाकटाक्ष पात किया था उससे तृप्त मनवाले भार्गवीयने अब दूध पीना भी छोड दिया और वह वेत्राजीवियों के घर में आनन्द के साथ बढने लगे ॥

**विचक्षणो विश्वविमोहहेतोः कुलोचिताचारकलानुषक्तः ।**
**पुण्ये महीसारपुरे विधाय विक्रीय शूर्पं विचचार योगी ॥ ५२ ॥**

कोई अनधिकारी विना आधिकारी बने मुझे न जान ले इस विचार से बुद्धिमान् भार्गवीय योगी शूर्पकारों के कुल के उचित आचार की कला में अनुषक्त होकर पवित्र महीसारपुर में ही सूर्प बनाते और बेचते हुए विचर ने लगे। क्योंकि योगियों के लिए शास्त्र की आज्ञा है कि वे अपने वास्तविक स्वरूप को छिपाये रहें ॥ ५२ ॥

**मलीमसे वेश्मनि वैत्रिकाणां कृताधिवासोऽपि स भार्गवीयः ।**
**स्वतेजसा विश्वविबोधकेन दिवीव देवो दिनकृद्दिदीपे ॥ ५३ ॥**

वह भार्गवीय बालक बेंत की टोकरी, सूर्प आदि बना कर जीविका करनेवाले शूद्रों के अत्यन्त मलिन घर में रहते हुए भी विश्व को बोध देनेवाले अपने तेज से इस तरह देदीप्यमान हुए जिस तरह आकाश में दिन के करनेवाले सूर्यदेव विश्व को बोध देनेवाले अपने दिव्य तेज से देदीप्यमान होते हैं ॥ ५३ ॥

**क्वचिद्वने क्लृप्तगुहाधिवासः साष्टाङ्गयोगोषितचित्तवृत्तिः ।**
**स निर्भरज्ञानरविप्रकाशैः अपाचकारान्तरमन्धकारम् ॥ ५४ ॥**

कहीं वनगुफा में निवास करते हुए अष्टाङ्गयोग में चित्त की वृत्तियां लगा कर पूर्णज्ञानरूपी सूर्य के प्रकाशों से हृदय के भीतर के अन्धकार को दूर कर दिया ॥ ५४ ॥

**निरुध्य मार्गान्मरुतां निसर्गात् निरर्गलं प्राप्तसमाधियोगः ।**
**निजां परब्रह्मणि चित्तवृत्तिं निवेशयामास निरन्तरायम् ॥ ५५ ॥**

भार्गवीय ने विना किसी परिश्रम के अपने आप प्राणादि वायुओं के आने जाने के मार्ग को रोक कर समाधिदशा को प्राप्त हो चित्तवृत्ति को विना किसी विघ्न के परब्रह्म में लगा दिया ॥ ५५ ॥

**इत्थं समास्थाय तपोऽभिवृद्ध्यै स्थानानि सप्त क्रमशस्स योगी ।**
**पृथक् पृथक् तत्र गुहानिविष्टो मुदा शरत्सप्तशतीमनैषीत् ॥ ५६ ॥**

इस प्रकार योग करते हुए योगी भार्गवीय ने तप की वृद्धि के लिए भिन्न भिन्न सात स्थानों की भिन्न भिन्न गुफाओं में सौ सौ वर्ष के क्रम से सात सौ वर्ष व्यतीत कर दिये ॥ ५६ ॥

**ततस्स शैवार्हतबौद्धमुख्यान् बाह्यान् तपस्वी समयान् विगाह्य ।**
**तदीयभावानुगतश्चिरेण विवेद तत्तन्मततत्वसारम् ॥ ५७ ॥**

इसके बाद वह तपस्वी भार्गवीय शैव, जैन, बौद्ध आदि वेदबाह्य दर्शनों का भली भांति अवगाहन करके उन दर्शनों के भावों के अनुगत हो कर बहुत से समय में उन सब मतों के तत्व का सार जान गये ॥ ५७ ॥

**वैयासिकं कापिलमाक्षपादं काणादपातञ्जलजैमिनीयम् ।**
**विज्ञाय शास्त्रं तदनुप्रविष्टः कुदृष्टिसिद्धान्तमपि व्यबोधि ॥ ५८ ॥**

व्यासकृत उत्तरमीमांसा, अक्षपाद (गौतम) का न्यायदर्शन, कणाद का वैशेषिक दर्शन, कपिल का सांख्यदर्शन, पतञ्जलि का योगदर्शन तथा जैमिनीय दर्शन यानी पूर्वमीमांसा इन शास्त्रों को जान कर इनमें प्रवेश किया और कुदृष्टियों के* सिद्धान्तों को भी जाना ॥ ५८ ॥

**एकैकसिद्धान्तरहस्यमुद्रानिरूपणक्रीडनलम्पटेन ।**
**महौजसा भार्गवनन्दनेन शतं समग्रं शरदामनायि ॥ ५९ ॥**

एक एक सिद्धान्त के गूढ रहस्यों की मुद्रा के निरूपणरूप खेल के व्यसनी परम तेजस्वी भार्गवनन्दन ने सौ सौ वर्ष एक एक मत में बिताये अर्थात् हर एक मत के जानने तथा निरूपण करने एवं उसकी खोज में सौ सौ वर्ष इस भार्गवीय ने लगाये थे ॥ ५९ ॥

**शैवादिसिद्धान्तसमर्थितानि समीक्ष्य सर्वाण्यपि दैवतानि ।**
**विनश्वराणीति विहाय तानि सद्वैष्णवं दर्शनमाससाद ॥ ६० ॥**

---

* वेद के यथार्थ अर्थ न कर के मनमाने अर्थों से परिकल्पित मतों को वैदिक कह कर प्रचार करनेवाले 'कुदृष्टि' कहलाते हैं ।

शैव आदि दर्शनों के सिद्धान्त जिन देवताओं का समर्थन करते हैं उन सब देवताओं को इन्होंने विनश्वर समझा, इस कारण उन दर्शनों को छोडकर सद्वैष्णव दर्शन को प्राप्त हुए ॥ ६० ॥

**स वैष्णवं वेदशिरोरहस्यनिदर्शनं दर्शनमीक्ष्य साक्षात् ।**
**तन्मन्यमानः परतत्वमुद्राप्रकाशकं तत्प्रवणो बभूव ॥ ६१ ॥**

यह भार्गवीय वैष्णव दर्शन को साक्षात् वेदान्त रहस्यों को अच्छी तरह दिखानेवाला समझकर और उसे परतत्व का प्रकाशक मानकर उसीमें पूर्ण रूप से लग गये ॥ ६१ ॥

**तपोनिधिस्तत्र समस्तलोकनिदानमालोक्य पतिं रमायाः ।**
**निवेशयामास विशेषभक्तिं परस्य तस्याङ्घ्रिसरोजयुग्मे ॥ ६२ ॥**

वहां तपोनिधि भार्गवीय ने सब लोकों के आदि कारण रमापति भगवान् को जान कर उसी परब्रह्म परमात्मा के युगल चरणकमलों में अत्यन्त भक्ति की ॥ ६२ ॥

**साष्टाङ्गयोगं सहसा प्रपद्य सनातनं योगवतां वतंसः ।**
**तमेव हेतुं जगतां त्रयाणां विभावयामास स भार्गवीयः ॥ ६३ ॥**

योगवालों के भूषण भार्गवीय ने अष्टाङ्गयोग को प्राप्त कर सनातन तीनों लोकों के कारण विष्णु भगवान् को ही ध्यान किया ॥ ६३ ॥

**नारायणो भार्गवनन्दनस्य तदीयचेतोनलिनद्विरेफः ।**
**तदा दयालुस्सविभूतिकं स्वं सन्दर्शयामास स विश्वरूपम् ॥ ६४ ॥**

उसी समय उसके हृदयकमल के भौंरा बने हुए दयालु नारायण भगवान् ने भार्गवनन्दन को अपना विभूति सहित विश्वरूप दिखा दिया ॥ ६४ ॥

**अवेक्ष्य भक्तिं परमां तदीयां यदा दयालुर्भगवानमुष्मै ।**
**अदर्शयत् श्रीपतिरात्मरूपं तदा स नाम्नाऽजनि भक्तिसारः ॥ ६५ ॥**

जब भार्गवीय की परम भक्ति देखकर दयालु लक्ष्मीपति भगवान् ने इन्हें अपना आत्मरूप दिखाया, तब से ही इन भार्गवीय का 'भक्तिसार' नाम पड गया ॥ ६५ ॥

**स भक्तिसारो जगतां शरण्यं आनन्दसंदर्शितविश्वरूपम् ।**
**आलोक्य साक्षादरविन्दनेत्रं अभूत्तदानन्दपयोधिमग्नः ॥ ६६ ॥**

वे भक्तिसार, संसार को शरण देनेवाले, आनन्द से विश्वरूप दिखानेवाले और कमलनयन भगवान् को साक्षात् देखकर आनन्द के समुद्र में निमग्न हो गये ॥ ६६ ॥

**स एवमूचे हरिसन्निधाने शाक्यार्हताद्यास्समयाः प्रविष्टाः ।**
**सर्वाणि शास्त्राणि मयेक्षितानि भाग्येन विष्णुं परतत्वमापम् ॥ ६७ ॥**

भगवान् के समीप में भार्गवीय ने कहा कि मैं ने बौद्ध, जैन आदि सब के सिद्धान्तों में प्रवेश किया है तथा सब शास्त्र मैं ने देखा हैं, पर भाग्य से परतत्व विष्णु की प्राप्ति हुई है ॥ ६७ ॥

**निर्गत्य तस्मात् सहसा प्रदेशात्तपोवनं पावनमन्यदेत्य ।**
**तपश्चरन्तं गिरिजागिरीशौ अपश्यतां तौ वृषभाधिरूढौ ॥ ६८ ॥**

इसके बाद सहसा उस प्रदेश से निकल कर दूसरे किसी पवित्र तपोवन में जाकर तप करने लगे। एक दिन बैल पर चढे हुए श्रीशिव और श्रीपार्वती ने तप करते हुए भक्तिसार को देखा ॥ ६८ ॥

**अपृच्छदद्रेस्तनया महेशं अस्मिन् वनान्ते निभृताक्षवृत्तिः ।**
**कोऽयं तपस्याकुशलस्समास्ते ज्ञात्वैनमेष्याव इतो यथेच्छम् ॥ ६९ ॥**

श्रीपार्वतीजी श्रीमहादेवजी से पूछने लगी कि, इस वन के बीच तपस्या में ऐसा कुशल यह कौन हे? जिसने सब इन्द्रियों की वृत्तियों को रोक रखा है और यह कौन योग में निर्द्वन्द बैठा है। इसे जानकर फिर यहां से जहां इच्छा होगी, वहां चलेंगे ॥ ६९ ॥

**इति प्रियाया वचनं निशम्य तमाह योगीश्वरमिन्दुमौलिः ।**
**समागतोऽहं भगवन् महेशो मत्तो वरं प्रार्थय वाञ्छितं त्वम् ॥ ७० ॥**

प्यारी पत्नी के ऐसे वचन सुनकर श्रीमहादेवीजी महाराज पार्वती के साथ योगीराज भक्तिसार के पास आकर कहने लगे कि मैं भगवान् महेश आपके पास आया हूं जो चाहो सो मुझसे वर मांग लो ॥ ७० ॥

**श्रुत्वा वचस्तस्य स भक्तिसारो विहस्य वव्रे वरमेकमीशम् ।**
**सूत्रं यथा गच्छति सूचिकायाः मार्गे तथा त्वं कुरु मे प्रसादम् ॥ ७१ ॥**

महायोगी भक्तिसार ने श्रीमहादेवजी के वचन सुनकर हंसकर यह एक वरदान मांगा कि सुई के मार्ग से धागा भी निकलता जाय यही मुझे वर दीजिये ॥ ७१ ॥

**इति ब्रुवाणं कुपितस्य शंभोः अनंगतां योगिवरं निनीषोः ।**
**ललाटनेत्रात् प्रससार सद्यो ज्वालाजटालोज्ज्वलनप्ररोहः ॥ ७२ ॥**

ऐसे कहते हुए भक्तिसार योगी को अनङ्गता प्राप्त कराने की इच्छा-वाले यानी शरीर रहित करने की या कामदेव की तरह जलाने की इच्छा-वाले श्रीमहादेव भगवान् तीसरे नेत्र से शीघ्र ही ऐसी आग की लपट निकाली जिससे ज्वाला की जटाएं निकलने लगीं ॥ ७२ ॥

**समीक्ष्य तं शाम्भवलोचनाग्निं प्रसारयामास पदाम्बुजे सः ।**
**ज्वलत्कृशानून्यकृशान्यभूवन् तयोस्तदा तादृशलोचनानि ॥ ७३ ॥**

भार्गवीय ने श्रीमहादेव के नेत्र से निकली हुई आग को देख कर अपने चरणकमल के अंगूठे पर एक नेत्र उत्पन्न करके उससे अग्नि उत्पन्न की। तब इन दोनों के नेत्रों में बडी प्रचण्ड अग्नि जलने लगी ॥ ७३ ॥

**अत्यर्कवैश्वानरमस्य पादचक्षुर्महस्सोढुमशक्नुवानः ।**
**तच्छान्तिहेतोस्तरुणेन्दुमौलिः स पुष्कलावर्तकमादिदेश ॥ ७४ ॥**

भार्गवीय के चरणकमल के अंगूठे के नेत्र से निकली हुई अग्निका तेज सूर्य और अग्नि के तेज से कहीं बढकर था, श्रीशिवजी इसको न सह सके। तब चन्द्रमौली भगवान् ने उस आग को बुझाने के लिए 'पुष्कला वर्तक' नामक मेघ को आज्ञा दी ॥ ७४ ॥

**धारालधाराधरजृम्भणेन नारायणासक्तमनःप्रवृत्तिः ।**
**स भक्तिसारो न चचाल योगी काले यथा प्रावृषि भूधरेन्द्रः ॥ ७५ ॥**

यद्यपि वडी वडी मोटी धारावाले मेह वडी वडी मोटी धाराओं से निरन्तर वरस रहे थे, पर तो भी भक्तिसार योगी के मन की प्रवृत्ति नारायण भगवान् में ऐसी लगी हुई थी कि वह अणुमात्र भी विचलित न हुए जैसे वर्षाऋतु की वर्षा से पर्वतराज विचलित नहीं होता ॥ ७५ ॥

विलोक्य तं विस्मयमानचेता हरो भवानीमिति वाचमूचे ।
सुदुर्जया भागवता मया हि रुषाऽम्बरीषस्य जितोऽत्रिपुत्रः ॥ ७६ ॥

महादेव उसको देख चित्त में अचम्भा करके पार्वतीजी से बोले कि भागवत लोग मेरे लिए वडें दुर्जय हैं मैं किसी प्रकार भी उन्हें नहीं जीत सकता। अम्बरीष के क्रोधमात्र से ही दुर्वासा पराजित हो गये थे ॥ ७६ ॥

अथ विषमशरारिर्भक्तिसारस्य तेजः
प्रसरमपरिभाव्यं श्लाघमानो निकामम् ।
सह गिरिवरपुत्र्या शाक्करेन्द्राधिरूढो
निजवसतिमयासीन्निर्जरैर्वन्द्यमानः ॥ ७७ ॥

इसके उपरान्त कामदेव के वैरी श्रीशिव भगवान् जिसका कोई तिरस्कार नहीं कर सकता ऐसे वडे, भक्तिसार के तेज की अत्यन्त प्रशंसा करते हुए पार्वतीजी के साथ अपने नन्दी नामक वैल पर चढकर देवताओं से वन्द्यमान हो, अपने स्थान को प्रस्थान किया ॥ ७७ ॥

स्वामी रङ्गपतिर्गुरुर्वरवराधीशश्च यस्यातुलो
वाधूलो वरदः पिता वरवरक्षेमेशलक्ष्मीसखः ।
लोकेशा जननी तु तस्य गरुडश्रीवाहन श्रीसखः
काव्ये दीव्यति दिव्यसूरिचरिते सर्गो द्वितीयो गतः ॥

जिनके स्वामी अतुलनीय श्रीरङ्गनाथ हैं, गुरु हैं वरवराधीश, पिता हैं श्रीरङ्गनाथ की आरोग्यशाला के अधिपति होने का सौभाग्यप्राप्त वाधूलवरद, और माता हैं लोकेश्वरी, उस गरुडवाहन श्रीनिवास के बनाये उज्वल दिव्यसूरिचरित काव्य में यह द्वितीय सर्ग समाप्त हुआ ।

द्वितीयः सर्गः समाप्तः ।

---

# तृतीयस्सर्गः

## श्रीभक्तिसारचरित्र

**अथैकदा ब्रह्मणि रूढमानसे पटच्चरं सीव्यति भार्गवात्मजे ।**
**यदृच्छयागत्य तरक्षुवाहनः समाययौ व्योमपथेन कोङ्कणः ।। १ ।।**

एक दिन महायोगी भार्गवीय पुरुषोत्तम भगवान् में मन लगाकर पुराने चिथडं को सी रहे थे कि इतने में कोङ्कण नामक एक योगी सिंह पर सवार आकाश मार्ग से इनके ऊपर अचानक आ पहुंचे ।। १ ।।

**स भार्गवीयस्य तपःप्रभावतः तदा तरक्षुर्विनिगन्तुमक्षमः ।**
**स्थितोऽभवत्तं समवेक्ष्य कोङ्कणः किमेतदित्याकलयत् सविस्मयः ।।२।।**

जिस समय वह शेर भार्गवीय के शिर पर पहुंचा उसी समय भार्गवीय के तप के प्रभाव से वह वहां का वहीं खडा रह गया, आगे न चल सका । यह देखकर कोङ्कण को विस्मय हुआ और वह विचारने लगा कि यह क्या हुआ ।। २ ।।

**ममाद्य वाहस्य गतेर्निरोधको न कश्चिदभ्रे भुवि के नु योगिनः ।**
**वसन्त्यधस्तादिति चारयन् दृशौ स भार्गवीयं समलोकयन्मुनिम् ।।**

इस समय मेरे शेर की चाल को रोकनेवाला आकाश में तो कोई है नहीं, क्या भूमि में ऐसे कोई योगी हैं ? इस विचार से नीचे की ओर दृष्टि डालकर देखा तो उन्होंने भार्गवीय मुनि को देखा ।। ३ ।।

**तदा तरक्षोरवरुह्य स क्षणात् तमन्तरिक्षादभिगम्य भार्गवम् ।**
**जगाद जीर्णांशुकमद्य सीव्यसि त्यजैतदन्यद्गृज मत्प्रसादतः ।। ४ ।।**

तब वह अपने वाहन शेर से उतर कर आकाश से भूमितल पर आ गया, और भार्गव के पास आकर कहने लगा कि अब तुम पुराने कपडे को क्यों सीते हो, इसे छोड दो, मेरे अनुग्रह से दूसरा ले लो ।।४।।

**इति ब्रुवन् दिव्यपटेन निर्मितं स वारवाणं मुनये ददौ मुदा ।**
**अदर्शयत् सोऽपि निजाङ्गनं मणिस्वरूपं द्युमणिप्रभोपमम् ॥ ५ ॥**

इस तरह कहते हुए उसने आनन्द के साथ दिव्य वस्त्र से निर्मित एक अङ्गरेखा मुनि को देते हुए कहा, यह लो । यह देख भार्गव ने भी अपने शरीर से लगी हुई सूर्य की प्रभा के समान देदीप्यमान एक मणि उसे दिखायी ॥ ५ ॥

**स कोङ्कणः कोटचयसो विभेदिनीं मणिप्रमाणां गुलिकां ददौ पुनः ।**
**स भक्तिसारश्च निरस्य तां हसन् स्वकर्णविड्भिर्गुलिकां तथाऽकरोत् ॥**

उस कोङ्कण योगी ने एक कोटि भार लोहे को सोना वनानेवाली एक मणि जैसी गोली दी । भक्तिसार ने उसे दूर करके अपने कान के मैल से हंसी के साथ गोली वना डाली ॥ ६ ॥

**इयं हि कोटचाधिककोटिभेदिनी प्रगृह्यतां मे गुलिकेति शंसिनः ।**
**स भार्गवीयस्य विनम्य पादयोः ययौ दिवि व्याघ्रगतो मुनीश्वरः ७**

और कोंकण से कहा—"यह लो, यह गोली कोटि से भी अधिक लोहे के भारों के सोना वना सकती है लो, इस मेरी गोली को लो।" यह सुनकर शेर पर चलनेवाला मुनीश्वर भार्गवीय के चरणों में प्रणाम कर आकाश मार्ग से अपने गन्तव्य स्थान को चला गया ॥ ७ ॥

**स भक्तिसारोऽपि चिरं गुहान्तरे विहारिभिः प्रत्यर्टवि द्युतिच्छलात् ।**
**वसन् सरोभूतपिशाचनामभिः सुदूरतो दिव्यदृशा व्यदृश्यत ॥ ८ ॥**

जिसके आगे अघोरी कोङ्कण का सिद्धिमद चूरचूर हो गया था वह भक्त भार्गवीय भी अपनी गुफा में घुसकर भगवान का ध्यान करने लग गये । वन वन विहारी सरोयोगी, भूतयोगी और महद्योगी इन तीन योगियों ने दूर से ही भार्गवीय को दिव्य दृष्टि से देखा, तो इन्हें ऐसा प्रतीत हुआ कि यहां कोई दिव्यजोति जगमगा रही है ॥ ८ ॥

**महः किमेतन्महनीयमुज्ज्वलं महात्मनः कस्यचिदेधतेऽग्रतः ।**
**इति ब्रुवन्तौ चरमौ यथागतं गतौ महस्तत्सरसीभवोऽभ्यगात् ॥ ९ ॥**

भूतयोगी और महदाह्वय योगी यह कहते हुए कि किसी महात्मा का उज्ज्वल एवं पूजनीय तेज है, जहां जा रहे थे वहां ही चले गये और सरोयोगी वहीं पहुंच गये जहां भार्गवीय बैठे हुए थे ॥ ९ ॥

**गुहान्तिकं प्राप्य स दिव्यचक्षुषा समीक्ष्य किं भार्गव वर्तसे सुखम् ।**
**स भार्गवीयः किमु पद्मसम्भव त्वमागतोसीति मिथस्समूचतुः ॥१०॥**

श्रीसरोयोगी गुहा के समीप भार्गवीय को पा अपनी दिव्य दृष्टि से देखकर बोले कि भार्गवीय सुख से हो न। वह भार्गवीय भी अपनी दिव्य दृष्टि से देख कर बोले कि कमल से उत्पन्न होनेवाले कासार योगीजी, आप आ गये ॥ १० ॥

**परस्परं तावभिवन्द्य सङ्गतौ मुदा समालिङ्ग्य सबाष्पलोचनौ ।**
**उभौ सुखप्रश्नविधेरनन्तरं न्यषीदतां ब्रह्मणि विष्टमानसौ ॥ ११ ॥**

इन दोनों योगियों ने आपस में एक दूसरे की वन्दना की। आनन्द के अश्रु जिनके नेत्रों में वह रहे हैं ऐसे ये दोनों परमानन्द से एक दूसरे के साथ हृदय मिला मिला कर आलिङ्गन करके एक दूसरे के सुख की बात पूछकर वैठ गये। इन दोनों का मन हर समय ब्रह्म में लगा हुआ था ॥ ११ ॥

**यथा पयोभिः पयसां समागमः यथा मधूनां मधुभिश्च सङ्गमः ।**
**तथैकरस्यात्प्रणयस्तयोरभून्मुकुन्दचिन्तारसमुह्यदात्मनोः ॥ १२ ॥**

जैसे दूध दूध के साथ मिलकर एक हो जाता है। जैसे मधु मधु के साथ मिलकर अभिन्न और एकरस हो जाता है, वैसे ही एकरस होने के कारण इन दोंनों का प्रेम भी ऐसा ही हो गया। क्योंकि इन दोनों के मन भगवान् के ध्यान के रस में सब कुछ खोये हुए थे। यही दोनों का एक स्वभाव था जिससे ये दोनों आपस में मिलकर एक हो गये ॥ १२ ॥

**ततः प्रहृष्टौ चरमेतराम्वुधेः तपोधनौ पश्चिमतीरसीमनि ।**
**मयूरनाम्नो नगरस्य मण्डनं तमोपहं कैरवतीर्थमापतुः ॥ १३ ॥**

इसके पीछे दोनों तपोधन योगी परम प्रसन्न हो, पूर्वसमुद्र के पश्चिमी किनारे पर के मयूर नामक नगर के भूषण तथा अज्ञान नष्ट करने वाले कैरव नाम के तीर्थ पर पहुंचे ॥ १३ ॥

**तदीयतीराभरणस्य केसरद्रुमस्य मूले कलितास्पदावुभौ ।**
**समाधिभेदं सरहस्यमास्थितौ समन्वभूतां समयेऽधिकं सुखम् ॥ १४ ॥**

इस कैरव तीर्थ के किनारे पर इसके किनारे की शोभा वढानेवाला एक केसर का वृक्ष था, उसीके नीचे इन दोनों ने आसन लगा दिया। उसी जगह फिर दोनों असाधारण समाधि करने लग गये तथा उस समय इन्होंने अधिक सुख का अनुभव किया ॥ १४ ॥

**समाधिभेदान् स निशम्य भार्गवः सरोमुखात्तत्प्रमुदस्य दित्सया ।**
**समाह्वयत्साष्टशतालयाधिपान् रमापतींस्तत्र वृषाद्रिपादिमान् ॥१५॥**

भार्गव ने सरोयोगी से समाधि के भेदों को सुनकर इन्हें आनन्द देने की इच्छा से वेङ्कटाचल के अधिप से लेकर एक सौ आठ दिव्यदेशों के विष्णु भगवानों को उसी स्थान पर वुलाया ॥ १५ ॥

**बहूनुषित्वा दिवसान् यदृच्छया गते सरोजन्मनि भार्गवात्मजः ।**
**निजोर्ध्वपुण्ड्राचरणाय निर्मलां अखिद्यतोच्चैरनवाप्य मृत्तिकाम् ॥१६॥**

इस प्रकार वहुत दिन तक रह कर स्वेच्छा से सरोयोगी चले गये। पीछे भार्गवीय अपने ऊर्ध्वपुण्ड्र करने के लिए निर्मल मृत्तिका न पाकर, वडे दुःखी हुए ॥ १६ ॥

**समागतात्स्वप्नमुखेन विष्टपत्रयीपरित्राणधुरीणवीक्षणात् ।**
**अवाप योगी निशि वेङ्कटेश्वरात्स मृत्तिकाकुण्डमकुण्ठवैभवः ॥ १७ ॥**

तीनों लोकों की रक्षा में परम चतुर कटाक्षवाले वेङ्कटेश्वर भगवान् से रात को स्वप्न में ये पवित्र मिट्टी के कुण्ड का पता पा गये। क्यों कि यह परम भागवत भगवान् की कृपा से अप्रतिहत ऐश्वर्य थे ॥ १७ ॥

**ततस्समानीय तपोनिधिश्च तां अनन्यलभ्यामवदातमृत्तिकाम् ।**
**यथास्थलं केशवपूर्वनामभिः समार्पयद् द्वादशपुण्ड्रकानि सः ।। १८ ।।**

इसके उपरान्त तपोनिधि भार्गव ने उस मिट्टी के कुण्ड से अनन्यलभ्य यानी और जगह न मिल ने योग्य श्वेत मृत्तिका ले कर भगवान के नामों के साथ यथास्थान बारह तिलक लगाये ।। १८ ।।

**ततो विनिर्गत्य स भार्गवो मुनिः जगाम काञ्चीनगरं मनोहरम् ।**
**सरस्वतीसिन्धुनिरोधसेतुवच्छयानमासेवत तत्र माधवम् ।। १९ ।।**

वह भार्गव मुनि वहां से चलकर मनोहर काञ्ची नगर में पहुंचे। वहां नदी बनकर बहनेवाली सरस्वती को रोकने के लिए बांध की तरह शयनकरते हुए विष्णु भगवान् का दर्शन किया और उनकी सेवा में लगे ।।

**निषेव्य तं पन्नगभोगशायिनं गिरा स तुष्टाव कृपाकरं हरिम् ।**
**तदन्तिकोदारगुहाकृतास्पदो निनाय कालं कणिकृष्णसङ्गतः ।। २० ।।**

भगवान् का दर्शन करके उन पूर्वोक्त शेषशय्या पर शयन करनेवाले और कृपा करनेवाले हरिको स्तुति वाणी से करने लगे। पीछे उनके ही समीप बडी गुहा में रहकर कणिकृष्ण के साथ समय व्यतीत करने लगे ।।

**विशोध्य काचिज्जरठा गुहामुखं तपस्विनो गोमयवारिसेचनैः ।**
**सुजातगन्धैः सुमनोभिरक्षतैः अलंचकारानुदिनं समाहिता ।। २१ ।।**

कोई बूढो स्त्री तपस्वी भार्गवीय की गुफा के मुंह को झाड बुहार उसे गोबर पानी छिडक लीप देती थी। फिर सुगन्धित फूलों और अक्षतों से सावद्वार को सुशोभित कर दिया करती थी। यह वह काम नित्य वडी धानी के साथ किया करती थी ।। २१ ।।

**समाधिमुक्तस्स कदाचिदन्तिके समीक्ष्य वृद्धामभिवृद्धवैभवः ।**
**जगाद योगी वद किं तवेप्सितं मुदा ददामीति तमाह सा पुनः ।। २ ।।**

किसी दिन भार्गवीय ने समाधि के उतार के समय में अपने पास उस वृद्धा को देखा। उसे देखते ही उसकी सब दशा जान गये। इनके

यहां किसी वात की कमी तो थी ही नहीं, सव कुछ समर्थ थे । उस वृद्धा से बोले कि वता तू क्या चाहती है । जो तू चाहती है वह वस्तु मैं तुझे प्रसन्नता के साथ दे दूंगा । इस वाक्य को सुनकर वह वृद्धा बोली ।। २२ ।।

**अपास्य वृद्धत्वमपाङ्गवीक्षणात् अनुग्रहो मय्यनवग्रहो यदि ।**
**प्रदीयतां यौवनसम्पदुज्ज्वला त्वयाऽद्य मह्यं दयमानचेतसा ।। २३ ।।**

यदि आपकी मुझपर पूर्ण कृपा हो तो अपने कृपाकटाक्ष से मेरे इस बुढापे को दूर करके मुझे देदीप्यमान यौवनरूपी सम्पत्ति दे दीजिये ।। २३ ।।

**वरं वृणानामिति वामलोचनां चकार योगी युवतीं कटाक्षतः ।**
**विदिद्युते सापि विलासपेशलामवाप्य शोभामतिनिर्जराङ्गनाम् ।।२४।।**

वृद्धा इस प्रकार वर मांग ही रही थी कि श्रीभार्गवीय ने अपने कृपाकटाक्ष से उसे उसी समय कटीले नेत्रोंवाली युवती वना दिया।। २४।।

**समीक्ष्य तद्राज्यपतिस्तदाकृतिं मनोहरो मन्मथबाणबाधितः ।**
**ततस्स्वभार्यामकरोद्विलासिनीं न वस्तु रम्यं हरते कथं मनः ।। २५।।**

वहां का राजा इस स्त्री का मनोहर शरीर देखकर कामदेव के बाणों से व्यथित हो गया। इसके पीछे उसने इस विलासिनो को अपनी पत्नी वना लिया। क्योंकि सुन्दर वस्तु कैसे मन नहीं हरती ? ।। २५ ।।

**अनेहसा भूमिपतिर्महीयसा जगाद देवीं जरसाकुलेन्द्रियः ।**
**न मानुषीष्वीदृशमस्ति यौवनं कुतो भवत्या ध्रियते समार्जितम् ।।२६।।**

वह राजा वहुत दिनों के पीछे बुढापे से असमर्थ होकर अपनी स्त्री से कहने लगा कि तुम्हारे जैसा यौवन मानुषीयों में तो नहीं है । आपने यह यौवन कहां से प्राप्त कर लिया ? ।। २६ ।।

**इतीरयन्तं पतिमाह सा मुनेः अवेक्षणात् कस्यचिदात्तयौवना ।**
**तदीयशिष्यं कणिकृष्णसत्कविं समेत्य सद्यो भविता भवान्युवा ।।२७।।**

पति के ऐसा कहने पर वह पति से कहने लगी कि किसी मुनि के कृपाकटाक्ष से मुझे यह यौवन मिला है। उनका शिष्य कणिकृष्ण है जो अच्छा कवि है। उनसे मिलकर आप भी शीघ्र ही युवा बन सकेंगे ॥ २७ ॥

**निशम्य तस्या वचनं महीपतिः कवीश्वरं तं कणिकृष्णमाह्वयत् ।**
**गुरुं तव द्रष्टुमहं समुत्सहे समानयस्वाद्य तमित्युवाच सः ॥ २८ ॥**
**त्वमद्य पद्यं निरवद्यमादरात् कवीन्द्र किञ्चित्कथयस्व मत्कृते ।**
**इतीरयन्तं कणिकृष्णसत्कविः जगाद रोषादरुणीकृतेक्षणः ॥ २९ ॥**

उस राजा ने उस स्त्री के वचन सुनकरके कवीश्वर कणिकृष्ण को बुलवाया, उसके आने पर राजा ने निवेदन किया कि मैं आपके गुरु को देखना चाहता हूं, उन्हें ले आओ। आप मेरे लिए कोई मेरे विषय की अच्छी कविता सुनावें। राजा के ऐसा कहने पर कणिकृष्ण क्रोध से लाल लाल आखें करके कहने लगे ॥ २८, २९ ॥

**विना हरिं स्तोतुमिहान्यमीहते न मानुषं वा न च देवतान्तरम् ।**
**मदीयवाणीनियमो महानयं गुरुश्च मे नान्यगृहान् समेष्यति ॥ ३० ॥**

मेरी वाणी विना हरिभगवान् के दूसरे की स्तुति करने की चेष्टा भी नहीं करती। न वह किसी मनुष्य की कभी स्तुति ही कर सकती है, और न किसी दूसरे देवता की ही स्तुति कर सकती है। मेरी कविता का यह एक बडा भारी नियम है तथा मेरे गुरु भी किसीके मकान पर नहीं जाते आते ॥ ३० ॥

**तदीयमाकर्ण्य वचो नराधिपः समाबभाषे परुषं रुषा ततः ।**
**मदीयराज्यादविलम्बितं भवान् प्रयातु साकं गुरुणापि साम्प्रतम् ।३१।**

राजा कणिकृष्ण के ऐसे वचन सुनकर क्रोध के मारे कठोर वचन बोला कि इसी समय शीघ्र ही आप मेरे राज्य से अपने गुरु को भी साथ लेते हुए निकल जायें ॥ ३१ ॥

**इति क्षितीशेन समीरितस्स्वयं स भक्तिसारं प्रणिपत्य योगिनम् ।**
**निवेद्य वृत्तान्तमिमं प्रचक्रमे ततः प्रयातुं कणिकृष्णकोविदः ।। ३२ ।।**

जब राजा ने उससे ऐसा कह दिया तो फिर अपने स्थान में आ भक्तप्रवर योगिराज भक्तिसार के चरणों में पडकर सब वृत्तान्त कह सुनाया। पीछे विद्वान् कणिकृष्ण चलने की तैयारी करने लगे ।। ३२ ।।

**स गन्तुकामं कणिकृष्णमब्रवीत् तवानुयास्याम्ययनं जवादहम् ।**
**अथाच्युतो मामनुयास्यति ध्रुवं ततोऽनुयास्यन्ति तमेव देवताः ।।३३।।**

जाने की इच्छावाले कणिकृष्ण से श्रीभार्गवीय ने कहा कि मैं भी वेग के साथ तेरे पीछे पीछे चलता हूं। यह निश्चय है कि मेरे पीछे यहां के रहनेवाले भगवान् भी आवेंगे। इसके वाद उनके पीछे पीछे सब देवता आ जायंगे, इसमें कोई सन्देह न समझना ।। ३३ ।।

**इतीरयित्वा सहसा समुत्थितः स भक्तिसारो भगवन्तमच्युतम् ।**
**जगाद काञ्चीनगरस्य नायकं भुजङ्गमाधीश्वरभोगशायितम् ।। ३४ ।।**
**प्रयाति रोषात्कणिकृष्णकोविदः तमन्वगेमि त्वमिहास्पदं त्यजन् ।**
**फणीन्द्रतल्पं परिगृह्य मामनुव्रजेति पद्यं स विधाय निर्ययौ ।। ३५ ।।**

भक्तिसार योगी कणिकृष्ण से ऐसा कह कर झट उठे और शेष भगवान् के शरीर पर शयन करनेवाले काञ्ची नगरी के नायक अच्युत भगवान् से कहने लगे कि—'हे भगवन्! विद्वान् कणिकृष्ण, क्रोध से जा रहा है। मैं भी उसके साथ साथ जाऊंगा, आप भी इस स्थान को छोड कर अपनी शेषशय्या को साथ लेकर मेरे साथ चलो।" इस आशय का पद्य सुनाकर योगीराज भार्गवीय चल दिये ।। ३४, ३५ ।।

**तदाऽनुयाते तमशेषदैवतैः सहापरं ग्राममहीन्द्रशायिनि ।**
**तमोमयं विश्वमवेक्ष्य सव्यथः स्वदोषतो भूपतिरप्यथान्वगात् ।। ३६ ।।**

भक्तवत्सल को साथ चलने में देर क्या थी। झट चल दिये। जब संपूर्ण देवताओं को साथ में ले शेषशायी भगवान् दूसरे ग्राम जा रहे थे। उस राजा के राज्य में सब जगह अन्धकार ही अन्धकार हो गया। जिसे देख-

कर इसे बडा दुःख हुआ । उसने इस सब बखेडे का कारण अपने ही दोष को समझा, इसके बाद यह भी उनके पीछे पीछे हो गया ।। ३६ ।।

स भक्तिसारं कणिकृष्णमानमन् क्षमस्व मद्दोषमिति प्रसादयन् ।
महीपतिस्तौ मुदितौ न्यवर्तयत्समस्तदेवैश्च सहाहिशायिनम् ।। ३७ ।।

राजा ने भक्तिसार और कणिकृष्ण को अच्छी तरह प्रणाम करके कहा कि मेरे अपराध को क्षमा करो। भक्तराज तो दयालु थे ही, दोनों गुरु-चेले काञ्ची को लोट चले। सब देवताओं के साथ शेषशायी भगवान् भी अपने भक्तों के पीछे पीछे चले आये। इस प्रकार उस राजा ने सभी लोगों को लौटा लाया ।। ३७ ।।

पुनर्निवृत्तः कणिकृष्णकोविदः स भार्गवः काञ्च्यधिनाथमाधवः ।
इह त्वमास्तीर्य भुजङ्गसंस्तरं कुरुष्व निद्रामिति पद्यमातनोत् ।।३८।।

प्राज्ञ कणिकृष्ण फिर काञ्ची को लौट आये तो श्रीभार्गवीय भी काञ्ची चले आये। एवं काञ्ची के नाथ भगवान् भी पहुंच गये। काञ्ची में आकर भार्गवीय ने काञ्चीनाथ से पद्य बना कर कहा कि यहीं, आप शेषनाग का बिस्तर लगाकर नींद लें ।। ३८ ।।

तथेति गत्यागतिसूचनादधः स्वसव्यबाहुं परिधाय माधवः ।
यतोऽधिशिश्ये भुजगेन्द्रसंस्तरं तदुक्तकारी स इतीर्यते जनैः ।। ३९ ।।

शेषशायी भगवान् अपने आने-जाने की सूचना देने को अपना बायां हाथ शिर के नीचे दबाकर भार्गवीय के कथनानुसार शेषशय्या पर सो गये। इस कारण उस दिन से इन्हें लोग यथोक्तकारी भगवान् के नाम से पुकारने लगे ।। ३९ ।।

स भक्तिसारो निजमानसाद्बहिर्विनिस्सृतां भक्तिमिवात्तविग्रहाम् ।
कृतिं त्रिलोकोपकृतेः कृते तदा मुरद्विषो द्राविडभाषयाऽकृत ।। ४० ।।

उन श्रीभक्तिसार ने तीनों लोकों के उपकारी श्रीमुरारी भगवान् के विषय में द्राविड भाषा में कविता की जो भक्तिरस से इतनी सनी हुई थी

मानो भक्तिसार के हृदय से निकलकर भक्ति ने ही कविता का कलेवर धारण कर लिया है ॥ ४० ॥

स तत्र नीत्वा तपसा महीयसा समुज्ज्वलस्सप्तशतीमनेहसाम् ।
विधाय भक्त्या हृदि निर्ययौ स्थितं शयानमासीनमपीन्दिरापतिम् ॥

इन्होंने वहां ही महान् तप करके सात सौ वर्ष बिताये। पीछे अपनी भक्ति की शक्ति से स्थित सोते और बैठे हुए लक्ष्मीपति भगवान को हृदय में बिठाकर चल दिये ॥ ४१ ॥

विगाह्य चोलेन्द्रभुवं तपोधनो मधुद्विषद्भक्तिमनोज्ञमानसः ।
कवेरजातीरविशेषभूषणं स कुम्भघोणं मुदितस्समासदत् ॥ ४२ ॥

प्रणम्य भक्त्या परया स भार्गवः चिरादतृप्तामृतनामसंज्ञकम् ।
त्रिविष्टपत्राणचणं व्यजिज्ञपत्फणीन्द्रपर्यङ्कशयं श्रियःपतिम् ॥ ४३ ॥

विभो किमर्थं वद कुण्डलीशितुः तनोषि निद्रामधुनातनौ तनौ ।
किमु त्रिलोकोद्धरणक्रमक्लमात् किमादिदेवद्विषदाहतिक्लमात् ॥४४॥

किमम्बुराशेर्मथनक्रियार्तितः किमु क्षमोद्धारणखेदसंक्रमात् ।
त्रिलोकमानश्रमतो नु दण्डकावनान्तसञ्चारपरिश्रमेण वा ॥ ४५ ॥

मुदा समुत्थाय फणीन्द्रसंस्तरात् जगत्प्रभो नः कथयस्व कारणम् ।
इति ब्रुवाणं मुनिमैक्षताच्युतः शिरस्समुद्धृत्य स भक्तवत्सलः ॥४६॥

तपोधन और मधुसूदन भगवान की भक्ति से मनोहर मनवाले वह भक्तिसार योगी, कावेरी तट के विशेष भूषण कुम्भघोणनामक स्थान में प्रसन्नता के साथ आ विराजे। वहां तीनों लोकों के त्राण में परम प्रवीण और शेषशय्या पर शयन करनेवाले 'अतृप्तामृत' नामवाले लक्ष्मीपति भगवान को उस भार्गव भक्तिसार योगी ने परा भक्ति से प्रणाम कर के उनसे विज्ञापन किया कि—हे स्वामिन्! बताइये तो सही किस लिए सर्पराज शेष के विस्तृत शरीर पर आप नींद ले रहे हैं? तीनों लोकों के उद्धार करने अथवा नापने से जो श्रम हुआ है उसकी श्रान्ति मिटाने को सो रहे हैं या आदिदेव के वैरियों को मारने में जो क्लान्ति हुई है, उसे

दूर करने को सो रहे हैं। क्या समुद्रमंथन क्रिया के कारण जो परिश्रम हुआ उससे थक कर सो रहे हैं या वराहावतार में पृथ्वी का उद्धार करने की क्लान्ति से नींद ले रहे हैं या त्रिविक्रमावतार में धरती नापने की थकावट से सो रहे हैं, या रामावतार में दण्डकवन में पांव-पयादे चलने से थक गये हैं जिससे सोकर थकावट मिटा रहे हैं? हे जगत के स्वामी! शेषशय्या से आनन्द के साथ उठकर हमें कारण तो बताइये, ऐसे कहते हुए मननशील भार्गवीय को भक्तवत्सल अच्युत भगवान् ने सिर उठाकर देखा ॥ ४२, ४३, ४४, ४५, ४६ ॥

**निजस्वरूपं सविभूतिकं हरौ विशृङ्खलोद्यत्करुणे विवृण्वति ।**
**अनन्तवेदान्तविवर्तमातनोत्स्तवाङ्गिरा शार्ङ्गधरस्य भार्गवः ॥ ४७ ॥**

जिनकी करुणा विशृंखल होकर उदय होती है वे भगवान् विभूतियों सहित अपने स्वरूप को श्रीभार्गव के लिए दिखलाने लग गये। श्रीभार्गव भी शार्ङ्गधनुष को धारण करनेवाले भगवान् की ऐसी स्तुति करने लगे जो अनन्त वेदान्तों के विवर्त का (रूपान्तर का) विस्तार है ॥ ४७ ॥

**मयूरपुर्यामधिकाञ्चि यो मया व्यलोकि देवो भुजगेन्द्रविष्टरे ।**
**स कुम्भघोणेऽप्यपरोक्षतां गतः तपःफलात् तामरसेक्षणोऽद्य मे ॥४८॥**

मयूरपुरी में मैंने जो भगवान् देखे थे, जो मैंने काञ्ची में शेषासन पर देखे थे वही कमलनयन भगवान् तप के फल से इस समय मुझे कुम्भघोण में भी प्रत्यक्ष हो गये ॥ ४८ ॥

**इतीरयन् भार्गवनन्दनो मुनिः निनाय तस्मिन् निभृताक्षविभ्रमः ।**
**अनेहसां सप्तशतद्वयं ततः ययौ महाव्याघ्रपुरं यदृच्छया ॥ ४९ ॥**

इस प्रकार भगवान् के सामने कहते हुए सदा की भांति जितेन्द्रियत्व के साथ उसी जगह चौदह सौ वर्ष भगवान् के भजन-ध्यान में व्यतीत किये। पीछे अपनी इच्छा से महाव्याघ्रपुर चले गये ॥ ४९ ॥

**तमापतन्तं प्रतिवीधि योगिनं विचिन्त्य शूद्रं कृतशूर्पविक्रयम् ।**
**विहाय वेदाध्ययनक्रियादरं द्विजातिबाला दधतिस्म मौनिताम् ॥५०॥**

गली-गली विचरनेवाले एवं सूप वेचनेवाले योगी भार्गवीय को (साधारण मनुष्य क्या समझ सकते थे। ये तो वडों बडों के लिए रहस्य बने हुए थे।) शूद्र मानकर वेदपाठ करते हुए द्विजाति के बालकों ने वेद पढना छोडकर मौन ग्रहण कर लिया, सोचा कि जब यह शूद्र यहां से आगे निकल जाय, तव पाठ करेंगे ॥ ५० ॥

**विमाननाद्योगिवरस्य ते श्रुतेः विमुक्तशेषप्रतिभाविवर्जिताः ।**
**तमन्वयुस्तत्प्रतिबोधसिद्धये स कृष्णशालिं नखदारितं व्यधात् ॥ ५१ ॥**

इस प्रकार वेदाध्ययन वन्द करके जो भार्गवीय का अपमान किया था उससे उन्हें यह याद न रहा कि कहां से पढना छोडा है। यह जानने के लिए वह फिर योगिराज के पीछे दौडे तो योगिराज ने उन्हें याद दिलाने के लिए काले शालियों की एक वाल नखों से तोडकर उनकी तरफ फेंक दी और आगे चल दिये। भार्गवीय के ऐसा करने से लडकों को अपने पाठ की याद आ गयी कि "कृष्णानां व्रीहीनाम्" तक पाठ छोडा है। तब वे फिर पाठ करने लगे ॥ ५१ ॥

**वितन्वति ग्रामपतेस्तदार्हणां हरेर्द्विजेन्द्रे हरिपादनामनि ।**
**स यत्र योगी विचचार तत्र तं ददर्श वक्त्रं परिवृत्य माधवः ॥५२॥**

जिस समय हरिपाद नामक ब्राह्मण व्याघ्रपुर के अधीश्वर भगवान् की पूजा कर रहे थे उसी समय योगीराज भार्गवीय मन्दिर के सामने होकर निकले जिधर वह गये थे उधर को ही भगवान् गर्दन फेरकर देखने लग गये ॥ ५२ ॥

**सविस्मयस्तं परिवृत्तकन्धरं विलोक्य विष्णुं हरिपादकोविदः ।**
**सभक्तयः केऽपि चरन्ति योगिनः सलीलमत्रेति बहिर्विनिर्गतः ।।५३।।**

विद्वान् हरिपाद ने गर्दन फेरे हुए विष्णु भगवान् को देखकर बडा अश्चर्य माना और गर्दन फेरने पर विचार किया कि यहां कोई भक्त योगी विचर रहे हैं। उन्ही योगी को ढूंढने के लिए झट मन्दिर से बाहर निकल गये ।। ५३ ।।

**सविष्णुपादस्तमवेक्ष्य योगिनं वितीर्णचक्षुस्सकलासु दिक्ष्वपि ।**
**उदग्ररोमाञ्चघनां तनुं वहन् उवाच वाचं प्रणिपत्य पादयोः ।। ५४ ।।**

**भवत्प्रभावं परिवृत्तकन्धरो ममाधुनाऽदर्शयदत्र माधवः ।**
**मखं प्रवृत्तं प्रतिपद्य मामकं त्वयाऽग्रपूजा प्रतिगृह्यतां मुने ।। ५५ ।।**

चारों ओर देखने पर वह योगिराज दिखाई पडे जिन्हें देखते ही इसके शरीर में रोमांच हो गये। ऐसे ही शरीर से इन्होंने महात्मा के चरणों में पडकर कहा कि गर्दन फिरे हुए भगवान् ने आप के प्रभाव को मुझे यहीं दिखा दिया है, यानी आप भगवान् के सामने होकर जिधर गये उधर ही भगवान् ने गर्दन फिराकर देखा। इससे मुझे आप के प्रभाव का पता चल गया। हे मुनिराज! मेरा यज्ञ हो रहा है, आप यज्ञ में पधारकर अग्रपूजा ग्रहण करें ।। ५४, ५५ ।।

**इति ब्रुवाणेन स भार्गवः क्रतुं समेत्य सत्रा हरिपादसूरिणा ।**
**तदर्पितार्घ्यप्रमुखार्हणो बृसीं मनोहरां प्राविशदृत्विजां पुरः ।। ५६ ।।**

ऐसे कहते हुए हरिपादसूरि के साथ योगिराज भार्गव उनकी यज्ञभूमि को आये, वहां हरिपादसूरि ने अर्घ्यपाद्य से श्रीभार्गवीय का पूजन किया। पीछे सब ऋत्विजों के आगे कुशासन बिछा दिया, जिसपर यह भक्तराज विराजमान हो गये ।। ५६ ।।

यथाग्रतश्चेदिपमुख्यभूभुजां यदुप्रधानाय ददौ युधिष्ठिरः ।
तथाग्रपूजां हरिपादकोविदो मखे मुनीन्द्राय स ऋत्विजां पुरः ॥५७॥

जैसे युधिष्ठिर महाराज ने शिशुपाल आदि अनेक राजाओं के होते हुए भी यदुवंशियों के प्रधान भगवान् कृष्ण को अग्रपूजा दी थी, उसी तरह विद्वान् हरिपाद ने यज्ञ में सब ऋत्विजों के सामने मुनीश्वर भार्गव को अग्रपूजा दी ॥ ५७ ॥

तथाग्रपूजाकरणेन योगिनः प्रदुद्रुवुस्ते परुषोक्तयो रुषा ।
विहाय वेगेन वितानमृत्विजः विनन्दियन्तो हरिपादकोविदम् ॥५८॥

(जैसे युधिष्ठिरजी के यज्ञ में अग्रपूजा के समय शिशुपाल ने विघ्न किया था वैसे ही) भार्गवीय योगी की अग्रपूजा करने के कारण हरिपाद के यज्ञ के सब ऋत्विज कोप के वश हो उसकी निन्दा करते हुए यज्ञभूमि छोड झट चल दिये ॥ ५८ ॥

अशक्नुवानो मुनिरित्युदीरितां विडम्बनां सोढुमुदारवैभवः ।
प्रकाशयिष्यन् महिमानमात्मनः हरेः स्वपद्यं निरवद्यमातनोत् ॥५९॥

इस कही हुई अपनी विडम्वना को न सहन कर सकनेवाले और उज्ज्वल विभववाले भार्गवीय ने अपनी महिमा को दिखाने के लिए श्रीभगवान् के कुछ निर्दोष पद्य कहे ॥ ५९ ॥

रथाङ्गपाणे भगवन् रमापते सहेलमृत्विग्वचनापनुत्तये ।
मनोरविन्दादिह मामकाद्बहिः प्रकाशयेथास्सविभूतिकं वपुः ॥ ६० ॥

हे चक्र हाथ में रखनेवाले लक्ष्मीपति भगवन्! अनादर के साथ जो ऋत्विजों ने मुझे कटू वचन कहे हैं, उनको दूर करने के लिए मेरे हृदय कमल से निकल कर बाहर इन्हें विभूतिसहित अपने स्वरूप को दिखा दें ॥ ६० ॥

**तदा पुनस्तद्भणितेरनन्तरं समाविरासीत्सरसीरुहेक्षणः ।**
**गदाधनुश्शंखरथाङ्गनन्दकैस्फुरद्भुजश्शेषशयो रमासखः ॥ ६१ ॥**

भार्गवीय के कहने पर उसी समय ही कमलनेत्र लक्ष्मीपति शेषशायी भगवान् प्रकट हुए । भगवान् के हाथ गदा, धनुष, शंख, चक्र और नन्दक खड्ग से देदीप्यमान हो रहे थे ॥ ६१ ॥

**विधाय यज्ञं सफलं गदाधरे गते सह ब्रह्मपुरस्सरैस्सुरैः ।**
**स भक्तिसारोऽपि निषेवितुं हरिं मतिं दधे रङ्गमुखेषु धामसु ॥ ६२ ॥**

भगवान् के प्रकट हो जाने पर फिर यज्ञ में क्या कसर थी, वह सानन्द उसी समय पूरा हो गया । पीछे भगवान् ब्रह्मादि देवताओं के साथ अन्तर्धान हो गये । श्रीभक्तिसार ने भी भगवान् की सेवा करने के लिए श्रीरङ्ग आदि धामों को जाने का विचार किया ॥ ६२ ॥

**अथ हृदयतः प्रादुर्भूते समस्तजगत्पतौ**
**परमपुरुषे भक्तिप्रह्वस्य भार्गवयोगिनः ।**
**विगतकलुषा होतारस्ते प्रणेमुरमुं क्षणात्**
**अधिगतमतिः को वा न स्याद् गुणेषु कुतूहली ॥ ६३ ॥**

भगवान् परमपुरुष की भक्ति से भार्गव योगी के हृदय से समस्त जगत के स्वामी श्रीपुरुषोत्तम के प्रकट होने पर ऋत्विजों का कालुष्य दूर हो गया और झट वे भक्ति से भार्गव योगी के चरणों पर पड गये । जिसे कुछ ईश्वर ने बुद्धि दी है वह ऐसा कौनसा प्राणी होगा जिसे गुणों के विषय में श्रद्धा न उत्पन्न हो ॥ ६३ ॥

तृतीयःसर्गः समाप्तः ।

---

# चतुर्थस्सर्गः

## श्रीभगवान् शठकोपसूरिजी का वैभव

अस्ति पूर्वपयोराशेः क्वापि पश्चिमरोधसि ।
मण्डले पाण्ड्यभूपस्य नगरी कुरुकाह्वया ॥ १ ॥

पूर्व समुद्र के पश्चिमी किनारे पर पाण्ड्यराजा के मण्डल में कोई कुरुका नाम की नगरी है ॥ १ ॥

कौरवेण नरेन्द्रेण द्वापरे परिपालिता ।
तदाख्यया या विख्याता ताम्रपर्णीसरित्तटे ॥ २ ॥

द्वापर में इसका परिपालन कौरव राजा ने किया था, इसी कारण यह उनके नाम से प्रसिद्ध है । यह ताम्रपर्णी नदी के किनारे पर बसी हुई है ॥ २ ॥

ताम्रपर्णी नदी यस्यास्तरलोर्मिकरोद्धृतैः ।
मुक्ताफलैर्वितनुते मुदा पुष्पाञ्जलिश्रियम् ॥ ३ ॥

(ताम्रपर्णी नदी के मुक्ताओं के टुकडे चञ्चल तरङ्गों से बहकर पुरी की ओर आ जाते हैं, जिनसे कुरुकापुरी ऐसी शोभायमान होती है, मानों) ताम्रपर्णी नदी चञ्चल तरङ्गरूपी हाथों से आनन्द के साथ मुक्ताफलों की पुष्पांजलि कुरुकापुरी को भेंट कर रही है ॥ ३ ॥

वेद्यो वेदशिखाविद्भिः श्रीद्योतितभुजान्तरः ।
आद्यो यत्र प्रपन्नार्तिवैद्यो विष्णुः पुरोदभूत् ॥ ४ ॥

वेदान्त के वेत्ता ही जिन्हें जान सकते हैं जिनका वक्षस्थल श्रीमहालक्ष्मीजी से देदीप्यमान रहता है जो इस संसार के सब से आदि कारण है, अपने शरणागतों के दुःख हरने के लिए वैद्य हैं वे विष्णुभगवान् जहां पहले आविर्भूत हुए थे ॥ ४ ॥

मन्दाकिनीविलोलोर्मिमन्दानिलकिशोरकैः ।
आन्दोलिता विराजन्ते यत्र प्रासादकेतवः ।। ५ ।।

इस कुरुकापुरी में बडे-बडे प्रासादों की ध्वजाएं, मन्दाकिनी गंगा की चञ्चल तरङ्गों की मन्द मन्द वायु के छोटे छोटे झोंकों से फहराती हुई विराजमान हो रही हैं ।। ५ ।।

हरिन्मणिमयोत्तुङ्गहर्म्यशृङ्गानुषङ्गतः ।
अकारि भीरुभिर्यस्यामभ्रभ्रान्ततडिद्भ्रमः ।। ६ ।।

जिसमें पन्ने के सघन जडाऊ ऊंचे ऊंचे राजप्रासादों की चोटियां देखकर भयसहित लोग बादल में चमकती हुई बिजली का भ्रम करने लग जाते थे ।। ६ ।।

तत्तत्तपः प्रभावेन प्रत्यक्षितमुरारयः ।
श्रोत्रिया यत्र तिष्ठन्ति द्विजा श्रुत्यन्तवेदिनः ।। ७ ।।

वेदान्त के जाननेवाले आपके अपने अपने तप के प्रभाव से मुरारि भगवान् को प्रत्यक्ष करलेनेवाले वेदान्त के ज्ञाता श्रोत्रिय ब्राह्मण इस कुरुकापुरी में रहते हैं ।। ७ ।।

भगवत्पादयुगलीभक्तिद्योतितचेतसः ।
चातुर्वण्यभवा नित्यं प्रपन्ना यत्र जाग्रति ।। ८ ।।

भगवान् के दोनों चरणकमलों की भक्ति से प्रकाशित हो गये हैं अन्तःकरण जिनके, ऐसे चारों वर्णों के प्रपन्न लोग सदा अपने कार्यं में जागरूक रहते हैं ।। ८ ।।

विशेषात्पादजा यत्र विष्णुभक्तिपरायणाः ।
युगस्वभावतो धर्मसंपदार्जनलम्पटाः ।। ९ ।।

विशेष करके इस पुरी में चतुर्थ वर्ण के लोग चरण से उत्पन्न होने के कारण भगवान् की भक्ति में तत्पर हैं, कलियुग के स्वभाव के कारण ये धर्मरूपी सम्पत्ति के उपार्जन करने में ही अपनी लगन दिखा रहे हैं ।। ९ ।।

तत्रासीत्पादजातेषु कश्चिद्भागवताग्रणीः ।
श्रीमद्वळुदिनाडेन्द्रः सीमातीतगुणोल्बणः ॥ १० ॥

इस पुरी में एक वळुदिनाडेन्द्र नामक एक परम भागवत थे जिसके पवित्र गुणों की कोई सीमा ही नहीं थी । यह उसी चतुर्थवर्ण में पैदा हुए थे ॥ १० ॥

तस्य धर्मधरो नाम तनयस्समजायत ।
सार्थः कलिबलोत्सन्नधर्मोद्धरणकर्मणा ॥ ११ ॥

उनके धर्मधर नामक एक पुत्र उत्पन्न हुआ, जिनका कलि के बल से गिरे हुए धर्म का उद्धार करने के कारण यह नाम वास्तव में सार्थक था ॥ ११ ॥

चक्रपाणिस्ततो जातश्चक्रपाणिपरायणः ।
तत्पात्रसात्कृतस्वीयसमस्तधनसञ्चयः ॥ १२ ॥

धर्मधर को चक्रपाणि नामक पुत्र हुए । वह चक्रपाणि भगवान् के ध्यान में तत्पर थे । उन्होंने अपना इकट्ठा किया हुआ सब धन सत्पात्रों को ही दान में दे दिया ॥ १२ ॥

अजायत सुतस्तस्मात्प्रजानन्दनतत्परः ।
नाम यः प्राप दुर्दामा रत्नधामेति भूतले ॥ १३ ॥

चक्रपाणि के पुत्र रत्नधाम हुए जो सब संसार को आनन्द देनेवाले थे जिनका कोई दमन नहीं कर सकता था ॥ १३ ॥

सुमतिं सुषुवे सोऽपि सुतं पाटललोचनम् ।
सुकुमारयशस्सम्पत्सुरभीकृतदिङ्मुखम् ॥ १४ ॥

जिसने अपने निर्मल यश की सम्पत्ति से दिशाओं के मुख को सुगन्धित कर दिया था, ऐसा सुन्दर मतिवाला पाटललोचन नाम का पुत्र चक्रपाणिजी के हुआ ॥ १४ ॥

पुत्रं प्रासूत पोर्कारिं पुण्यैः पाटललोचनः ।
पुरुषोत्तमपद्पद्मस्फुरच्चित्तमधुव्रतम् ॥ १५ ॥

पाटललोचन के पुण्यों के प्रभाव से उनके पोर्कारि नाम का एक पुत्र उत्पन्न हुआ जो पुरुषोत्तम भागवान् के चरणकमलों का प्रसन्न चित्तवाला भौंरा था ॥ १५ ॥

कारीति तनुजो जातः कारीतिरहितस्ततः ।
दूरीकृतकलिर्भावादूरीकृतजनार्दनः ॥ १६ ॥

उसका पुत्र कारि हुआ । इसमें कोई बुरी रीति नहीं थी। इसने कलियुग को तो दूर किया था, पर जनार्दन भगवान् इससे दूर नहीं थे ॥ १६ ॥

कन्यामुदवहद्धन्यां कमलैधितवक्षसः ।
नवीनयौवनः कारी नामतो नाथनायिकाम् ॥ १७ ॥

युवा होने पर लक्ष्मीनिवासवक्ष की एक श्रेष्ठ कन्या के साथ विवाह किया जिसका नाम नाथनायिका था ॥ १७ ॥

भर्तृशुश्रूषणपरा भगवद्भक्तिभासुरा ।
श्यामावामालका पुत्रकामा सा समजायत ॥ १८ ॥

नाथनायिका पति की सेवा में तत्पर रहती थी। भगवान् की भक्ति से देदीप्यमान थी, बडी ही सुन्दर थी, घुंघराले बाल थे, पूर्ण युवावस्था प्राप्त थी, इसे पुत्र की इच्छा हुई ॥ १८ ॥

सा कदाचित्पितृग्रामादायान्ती पतिमन्दिरम् ॥
प्रणिपत्य कुरङ्गेशं पथि पुत्रमयाचत ॥ १९ ॥

नाथनायिका किसी दिन पिता के ग्राम से पति के घर को आती हुई रास्ते में ही कुरङ्गेश भगवान् को प्रणाम करके पुत्र की याचना की ॥१९॥

सर्वज्ञस्स कुरङ्गेशस्तस्यै प्रादान्मतं वरम् ।
पुत्रस्तव भविष्यामि पुत्रि गच्छेति चाब्रवीत् ॥ २० ॥

सब कुछ जाननेवाले कुरङ्गेश भगवान् ने उसको अभीष्ट वर दे कर कहा कि हे पुत्री तू जा, मैं स्वयं तेरा पुत्र होऊंगा ॥ २० ॥

**प्रपेदे भवनं पत्युः प्रहृष्टा नाथनायिका ।**
**आदिदेश कुरङ्गेशः सेनान्यं तत्र जन्मने ॥ २१ ॥**

नाथनायिका अपने अभीष्ट वर की प्राप्ति से परम प्रसन्न होकर पति के घर चली आयी । कुरङ्गेश भगवान् ने विष्वक्सेन को आज्ञा दी कि तुम नाथनायिका के यहां जन्म लो ॥ २१ ॥

**गर्भमाधत्त कालेन साऽचिरेण तलोदरी ।**
**पतङ्गमिव दिक् प्राची देवकीव यदूद्वहम् ॥ २२ ॥**

कृशोदरी नाथनायिका ने थोडे समय में ही गर्भधारण किया जैसे सूर्य को गर्भ में धारण किये हुए पूर्वदिशा सुन्दर मालूम होती है । देवकी ने भगवान् कृष्ण को गर्भ में धारण करके शोभायमान हुई थी, उसी तरह नाथनायिका भी विष्वक्सेन भगवान् को गर्भ में धारण करके शोभायमान हुई ॥ २२ ॥

**आपाण्डुगण्डफलकमानीलकुचचूचुकम् ।**
**आलोललोचनाम्भोजमस्या वपुरलक्ष्यत ॥ २३ ॥**

उस समय उसके शरीर की वही दशा हुई जो गर्भिणी की हुआ करती है, यानी कपोल गौर वर्ण के हो गये थे, कुचों के अग्रभाग काले हो गये थे और कमल जैसे वडे-वडे नयनों में चञ्चलता आगयी थी ॥ २३ ॥

**उद्गता रोमरेखाऽङ्गनादुत्पलाक्ष्यास्समुज्ज्वला ।**
**विष्वक्सेनकरोदस्तविद्यावेत्रलतोपमा ॥ २४ ॥**

कमलनयिनी नाथनायिका की नाभि के कुछ नीचे से एक छोटे छोटे बालों की सीधी रोमरेखा हृदय तक चली गयी थी । वह ऐसी शोभायमान होती थी, मानों गर्भस्थित विष्वक्सेन भगवान् ने अपने विद्यारूपी वेत्र को ऊपर की ओर कर रखा हो ॥ २४ ॥

भ्रश्यद्वलित्रयाभोगा श्यामरोमलतोद्गमा ।
दृष्टिगोचरतां प्रापन्मध्ययष्टिर्मृगीदृशः ।। २५ ।।

उदर पर त्रिवली पडा करती थी, वह इस समय नहीं रही। वहां केवल एक छोटे छोटे काले बालों की पूर्वोक्त रेखा ही रह गयी थी। एवं कटिदेश जो पहले दिखाई नहीं देता था, अब दिखाई देने लगा ।। २५ ।।

असद्वादैरुपहितं ब्रह्म यस्सत्करिष्यति ।
असदित्युदितं मध्यं तस्या गर्भस्तदातनोत् ।। २६ ।।

उस गर्भ ने (अर्थात् गर्भ में आये हुए महात्मा ने) जो असद्वाद से छिपे हुए ब्रह्म को सत् सिद्ध करनेवाले हैं, उसके असत् यानी क्षीण मध्य भाग यानी कटि को बडा कर दिया अर्थात् मोटा बना दिया जिससे वह दीखने लग गया ।। २६ ।।

प्रायः पयोधरौ तस्याः काष्र्ण्यमावहतां मुखे ।
गर्हयन्तौ कुमारो न पयः पास्यति नाविति ।। २७ ।।

कुमार हमारा दूध न पीयेगा यह शोच नाथनायिका के स्तन आप ही अपनी निन्दा करते हुए मारे शोक के अपने मुंह पर अधिक कालिमा ले आये हैं। गर्भिणी के स्तनों के अग्रभाग काले होते ही हैं उस विषय की यह कवि की मनोरञ्जक उत्प्रेक्षा है। इससे यह सूचना हो रही है कि उत्पन्न होनेवाला कुमार स्तन-पान न करेगा ।। २७ ।।

भूपयोऽर्चिर्मरुद्व्योम्नां तदा वृद्धिरभूत्क्रमात् ।
जिह्वाकुचवपुर्नासाऽवलग्नेषु मृगीदृशः ।। २८ ।।

उस समय उसकी जीभ, कुच, शरीर, नासिका और शरीर के मध्य भाग में क्रम से भूमि, जल, तेज, वायु और आकाश की वृद्धि हुई अर्थात् जीभ में स्वाद, कुच में दूध, शरीर में तेज, नासिका में दीर्घ श्वास तथा मध्य भाग कटि में अवकाश की वृद्धि हुई ।। २८ ।।

दददर्श दयिताकारैर्गजाननमुखैर्गणैः ।
सूत्रवत्याऽपि च स्वप्ने स्वमात्मानं निषेवितम् ॥ २९ ॥

नाथनायिका ने स्वप्न में देखा कि सुन्दर आकारवाले गजमुख से लेकर जितने गण हैं वे सव मेरी सेवा कर रहे हैं तथा विष्वक्सेन की पत्नी सूत्रवती भी मेरी सेवा कर रही है ॥ २९ ॥

राधे कलिदिने लाभे वैशाखे काव्यवासरे ।
लग्ने कर्कटकेऽसूत तनयं नाथनायिका ॥ ३० ॥

कलि प्रारम्भ के ४३ वें दिन वैशाखमास के विशाखा नक्षत्र शुक्रवार के दिन कर्कट लग्न में नाथनायिका के एक पुत्ररत्न उत्पन्न हुआ ॥ ३० ॥

प्रहृष्टं विदुषां चित्तं प्रसन्नास्सकला दिशः ।
अमन्दसौरभोदारास्सुखा गन्धवहा ववुः ॥ ३१ ॥

उस समय सत्पुरुषों का चित्त परम प्रसन्न हो रहा था, सव दिशाएं परम प्रसन्न थीं, एवं मन्द मन्द और वडी ही सुगंध लिये हुए पवन चल रहा था ॥ ३१ ॥

वृन्दारकाणां बृन्दानि सेन्द्राणि गगनान्तरे ।
मन्दारसुमनोवृष्टिं मन्दरां मुमुचुस्तदा ॥ ३२ ॥

उस समय इन्द्रादिक देवता अपने अपने आकाशयानों में बैठ कर नाथनायिका के ग्राम पर मन्दार के फूलों की सुहावनी सघन वर्षा करने लगे ॥ ३२ ॥

गृहेषु यायजूकानां कृशानुस्साप्ततन्तवः ।
प्रदक्षिणशिखाजालैर्जज्वाल स्वयमुज्ज्वलः ॥ ३३ ॥

सावधानी के साथ यज्ञ में लगे रहनेवाले कर्मकाण्डी अग्निहोत्रियों के घरों में रहनेवाला परम पवित्र जो यज्ञ का अग्निदेव है वह प्रदक्षिण के

तौर पर घूमती हुई लटाओं के साथ जल रहा था या देदीप्यमान हो रहा था ।। ३३ ।।

**सूतिकागृहमासाद्य तस्मै ज्ञानमधोक्षजः ।**
**वाराहमूर्त्तिर्भगवान् जायमानाय संददौ ।। ३४ ।।**

जितेन्द्रियों को प्रत्यक्ष होनेवाले श्रीवाराहमूर्ति भगवान् ने प्रसूतिका के घर में आकर पैदा होने के समय ही उसे दिव्यज्ञान दे दिया ।। ३४ ।।

**असौष्ट तनयं यस्मिन्मुहूर्ते नाथनायिका ।**
**निर्निद्रतिन्त्रिणीरूपश्शेषस्तन्नगरेऽभवत् ।। ३५ ।।**

जिस मुहूर्त में नाथनायिका ने इस बालक का जन्म दिया था, उसी मुहूर्त में शेषभगवान् एक इमली के वृक्ष के रूप में उसी नगर में आ उत्पन्न हुए । इस वृक्ष में तत्वबोधक यह विशेष चिन्ह है कि यह नींद कभी नहीं लेता है ।। ३५ ।।

**कृपया श्रीपतेर्लब्धज्ञानो नाङ्गीचकार सः ।**
**जनन्या अपि च स्तन्यं नौदनं न च रोदनम् ।। ३६ ।।**

भगवान् की कृपा से इस बालक को ज्ञान मिल ही गया था, इस कारण इसने न तो माता का स्तनपान किया और न अन्न ही ग्रहण किया, न रोया ।। ३६ ।।

**स्तन्यादिहेयवस्तूनां संन्यासात्पितरौ शिशोः ।**
**मारनित्यभिधामुक्त्या द्रामिड्या चक्रतुस्तदा ।। ३७ ।।**

उस समय स्तनपान आदि हेय वस्तुओं के छोड देने के कारण माता-पिताओं ने द्राविडी (तमिळ) भाषा में लडके का नाम "मारन्" (माने विलक्षण) रख दिया ।। ३७ ।।

**मौनी स भगवज्ज्ञानपूर्णात्मा कारिनन्दनः ।**
**सद्यः प्ररूढसंवृद्धचिञ्चामूलमथाभजत् ।। ३८ ।।**

भगवान् के ज्ञान से परिपूर्ण वह मौनी कारिपुत्र उस इमली के पेड के नीचे चला आया जिसे कि हम पहले कह चुके हैं। यह पेड भी जिस समय उत्पन्न हुआ था उसी समय बढ गया था ॥ ३८ ॥

अदृष्ट्वा सदृशज्ञानं कञ्चित्पुरुषमग्रतः ।
स किङ्कर्तव्यतां ध्यायन् तत्र वाचंयमोऽभवत् ॥ ३९ ॥

उसने देखा कि मेरे सामने कोई मेरे समान ज्ञानी तो है ही नहीं, अब मुझे क्या करना चाहिये। इस चिन्ता में उसी पेड के नीचे वाणी को नियमित करके मौनी हो गया ॥ ३९ ॥

ततः प्रादुरभूत्तत्र जिज्ञासुस्तदुपक्रमम् ।
भगवान् परमव्योम्नः ताक्ष्यारूढो रमासखः ॥ ४० ॥

इसके पीछे उसके कार्यक्रम को जानने की इच्छा से लक्ष्मीजी के साथ भगवान् गरुड पर चढ कर वैकुण्ठ से आकर वहां प्रकट हुए ॥ ४० ॥

स दृष्टिगोचरे विष्णौ श्रुतीनामप्यगोचरे ।
सानन्दबाष्पनयनस्सरोमाञ्चवपुर्बभौ ॥ ४१ ॥

जो विष्णुभगवान् श्रुतियों के भी विषय नहीं हैं उन विष्णुभगवान् को अपने नेत्रों के सामने देखकर आनन्द के मारे आंखों में आंसू आ गये, शरीर में रोमांच हो गया, इससे वह अत्यन्त शोभायमान होने लगे ॥ ४१ ॥

चिकीर्षुश्चतुरो वेदांस्तन्मुखेन परःपुमान् ।
द्रामिडोक्त्या जगत्त्राणात् कारिसूनुमलोकयत् ॥ ४२ ॥

पुरुषोत्तम की इच्छा थी कि इसके मुख से चारों वेदों को द्रामिड भाषा में करा दूं जिससे संसार की रक्षा होगी। इसीसे भगवान् ने कारि के पुत्र को कृपादृष्टि से देखा ॥ ४२ ॥

5

सुधामयूखेन सुजातमाननं व्यधायि नूनं विधिनाऽऽनतभ्रुवः ।
न चेदमुष्मिन् हरिणादृते कथं विशृङ्खलं जाग्रति पुष्कलाः कलाः ॥

मालूम तो ऐसा होती है कि वडी-वडी भोंहोंवाली गोदा के मुंह को ब्रह्मा ने चांद से वनाया था। यदि ऐसा नहीं तो भगवान् से आदर किये गये इस निष्कलङ्क मुख में वहुतसी कलाएं कहां से आकर जगमगाया करतीं ॥ ५२॥

शिरीषमालासुकुमारतासखी भुजालता सा स्फुरतिस्म सुभ्रुवः ।
ययाऽपनीपद्यत निर्विशेषता मुरारिकण्ठे तुलसीदलस्रजा ॥ ५३ ॥

शिरीषक फूलों की माला के सुकुमारपने की सखी इसकी लंवी-लंबी भुजाएं हैं, ये भुजालताएं तुलसीदल की माला के समान वारंवार भगवान् के कण्ठ में समानता को पा रही हैं।

सुलोचनायास्सुकुमारतासरिद्विहारिचक्रव्यवहारलम्पटौ ।
पयोधरावुद्गतरोमवल्लिकाप्रसूनगुच्छप्रतिभावराजताम् ॥५४ ॥

सुन्दर नयनोंवाली गोदा की सुकुमारता की नदी में स्तन ऐसे मालूम होते थे मानों इस नदी में विहार करने के शौकीन दो चकवे हैं। जव कटी से चली हुई रोमवल्ली के सम्वन्ध की तरफ ध्यान जाता था तो ऐसा मालूम होता था कि रोमावलीरूपी लता के ये स्तन दो वडे-बडे गुच्छे हैं ॥ ५४॥

तदङ्गयष्टिं मधुजिज्जिगीषया मनोभवश्शासनपत्रिकां व्यधात् ।
वितानमाशंक्य वलग्नमन्तरा गभीरनाभीनिभबिन्दुमालिखत् ॥ ५५ ॥

कामदेव ने विष्णुभगवान् को जीतने की इच्छा से गोदा के शरीर को अपना आज्ञापत्र वना लिया था। एवं गोदा की कमर को तुच्छ समझ कर इसकी पहिचान के लिए काम ने आज्ञापत्र में नाभिरूप बिन्दु लगा दिया था ॥ ५५॥

पदद्वयं मत्तचकोरचक्षुषः प्रभापराभूतपयोजपल्लवम् ।
कथं सहेतोरसि कैटभद्विषः कठोरतां कौस्तुभरत्नसम्भवाम् ॥५६॥

मत्त चकोर के से नयनोंवाली गोदा के दोनों चरण अपनी प्रभा से कमल के पल्लव को भी मात कर देनेवाले थे। विचार तो इस वात का है कि भगवान् की उस वक्षस्थल की कठोरता को जो कि कौस्तुभमणि पहिनने के कारण हुई है, ये कैसे सहन करेंगे ॥ ५६ ॥

दिनेदिनेऽवर्धत सा पितुर्गृहे विवेकबुद्धया सह विष्णुसक्तया ।
कलेव कान्त्या हिमदीधितेर्नवा पटीरवल्लीव च गन्धसम्पदा ॥ ५७ ॥

गोदा पिता के घर पर दिन दिन वढती जाती थी, इसके साथ ही साथ विष्णु भगवान् में लगी हुई उसकी विवेक-बुद्धि भी बढती थी, जैसे कि चांद की कला सुन्दरता तथा प्रकाशके साथ बढती है, जैसे कि चन्दन की नई लता सुगन्धि के साथ वढती है, वैसे ही गोदा वढती जाती थी ॥ ५७ ॥

अथ समधिकस्फायत्तारुण्यसम्पदलंक्रिया-
ललितवपुषस्तस्याश्चित्तं प्रसक्तमजायत ।
भगवति चिदानन्दे कन्दे पुराणगिरां हरौ
प्रकृतिरुचिरे भावे प्रायो लगत्यचलात्मनाम् ॥ ५८ ॥

गोदा का सहज आभूषण इसको युवावस्था ही थी, यह युवावस्था अधिक से भी अधिक बढ गयी थी जिससे गोदा का शरीर परम सुन्दर मालूम होता था। इसका मन चिदानन्द, वेदों के मूल भगवान् में अनुरक्त हो गया था, क्योंकि दृढचित्त पुरुषों का अनुराग ऐसे पदार्थ में होता है जो स्वभाव से ही सब प्रकार सुन्दर हो ॥ ५८॥

नवमस्सर्गः समाप्तः ।

---

# दशमस्सर्गः

श्रीविष्णुचित्तस्संपूज्य सौरभोद्दामदामभिः ।
वटधामपतिं विष्णुं वासं निजमुपागमत् ॥ १ ॥

एक दिन श्रीविष्णुचित्तजी सुगन्धि से नासिका को तृप्त कर देनेवाली बडी-बडी मालाओं से, वटपत्रशायी भगवान् का पूजन करके, अपने निवासस्थान पर आये ॥ १ ॥

अक्षव्यापारमखिलं निक्षिपन्ती मुरद्विषि ।
गुरुं व्यजिज्ञपद् गोदा शुश्रूषुर्भगवद्गुणान् ॥ २ ॥

वहां पुत्री गोदा बाह्य विषयों से इन्द्रियों को रोक कर भगवान् में लगाती हुई भगवान् के गुणों को सुनने की इच्छा से पिता से बोली कि—

चरितानि जगत्त्राणचतुराणि मुरद्विषः ।
सकलान्यपि यत्तात जानीषे त्वं विशेषतः ॥ ३ ॥

हे पिता! आप संसार की रक्षा करने में प्रवीण जो भगवान् के चरित्र हैं, उन सबों को विशेषरूप से जानते हैं ॥ ३ ॥

अवन्यां कति धामानि हरेरर्चावतारिणः ।
अपदानं त्वमेतेषामधुना वक्तुमर्हसि ॥ ४ ॥

अर्चावतारी भगवान् जहां विराजते हैं ऐसे कितने स्थान हैं आप इस समय उन स्थानों का महत्त्व मेरे लिए सुनावें ॥ ४ ॥

इति प्रश्रयशालिन्या पुत्र्या विज्ञापितः पिता ।
वैभवं वैष्णवं वक्तुं वावदूकः प्रचक्रमे ॥ ५ ॥

प्रीति से प्रार्थना करने के स्वभाववाली पुत्री गोदा ने जब पिता से इस प्रकार प्रार्थना की तो पिता ने भी विष्णुभगवान् का वैभव कहना आरम्भ कर दिया, क्योंकि विष्णुचित्त अच्छे वक्ता थे, क्यों मौन रहते? ॥ ५ ॥

**अष्टोत्तरशतं धाम्नामस्त्यर्चारूपिणो हरेः ।**
**भुवि यद्वैभवश्रुत्या पुंसां मुक्तिः करस्थिता ॥ ६ ॥**

हे पुत्रि! इस लोक में अर्चारूपी भगवान् के १०८ धाम हैं जिनके वैभव सुनने मात्र से मनुष्यों को मुक्ति हस्तगत होती है ॥ ६ ॥

**विष्णुधामापदानानि विष्णुचित्ते विवृण्वति ।**
**मथुराधीशकृष्णस्य वृत्तेनाजनि विस्मिता ॥ ७ ॥**

जब विष्णुचित्त अर्चावतारी भगवान् के स्थानों का महत्त्व समझने लगे, उस समय क्रमप्राप्त मथुरा के अधिपति कृष्ण के चरित्र को सुन कर गोदा को बडा विस्मय हुआ ॥ ७ ॥

**ततस्सुन्दरराजस्य चरितं शृण्वती मुदा ।**
**उदारपुलकांकूरामुवाह सुतनुस्तनुम् ॥ ८ ॥**

इसके बाद सुन्दरराज भगवान् के चरित्र को सुनते आनन्द से सुन्दरी गोदा के शरीर में परिपूर्ण रोमांच हो आये ॥ ८ ॥

**वेंकटाद्रिपतेर्विष्णोः कथाकर्णनकर्मणा ।**
**रमणीये मुखे तस्या विकासोऽभूद्विजृम्भितः ॥ ९ ॥**

वेङ्कटेश भगवान् की कथा सुनने से गोदा के सुन्दर मुख पर पूर्ण विकास के चिन्ह दिखने लगे ॥ ९ ॥

**श्रीमतो रङ्गराजस्य शृण्वती महिमोदयम् ।**
**अधत्तामन्दमानन्दमरविन्ददलेक्षणा ॥ १० ॥**

श्रीरङ्गनाथ भगवान् के महिमा के उदय को सुनने के अवसर पर कमल के दल के समान नयनोंवाली गोदा परमानन्द को प्राप्त हुई ॥ १० ॥

**अतृप्ता रङ्गराजस्य प्रभावामृतपारणात् ।**
**इति स्मेरमुखी गोदा सवितारमभाषत ॥ ११ ॥**

जब रङ्गनाथ भगवान् के प्रभावरूपी अमृत की पारणा करती-करती न तृप्त हुई, तब मन्द मुस्कान के साथ पिता से कहने लगी—

**चरित्राणि पवित्राणि समस्तानि सविस्तरम् ।**
**क्रियासमभिहारेण कीर्तितव्यानि रङ्गिणः ॥ १२ ॥**

पिताजी ! रङ्गनाथ भगवान् के समस्त पवित्र चरित्रों को विस्तार के साथ शीघ्र ही वारंवार कीर्तन करें ॥ १२॥

**इत्युक्तवत्यां गोदायां विष्णुचित्तोऽवदन्मुदा ।**
**तादृशीं भक्तिमालोक्य तस्याश्श्रीरङ्गधामनि ॥ १३ ॥**

श्रीविष्णुचित्तजी गोदा के इस प्रकार कहने पर एवं श्रीरङ्गनाथ भगवान् में गोदा की वैसी ही भक्ति देख कर आनन्द के साथ रङ्गनाथ भगवान् के वैभव कहने लगे ॥ १३ ॥

**श्रूयतामादितो वक्ष्ये त्वया दत्तावधानया ।**
**दयाकरस्य चरितं देवदेवस्य रङ्गिणः ॥ १४ ॥**

दया के आकर देवदेव श्रीरङ्गनाथ के चरित्र को आरम्भ से कहता हूं । तुझने ही मुझे अवकाश दिया है, इस कारण तू पूरी सावधान हो कर सुन ॥ १४॥

**तत्तादृशेन तपसा सन्तुष्टः परमेष्ठिनः ।**
**उदगादुदरात्सिन्धोरुरगेन्द्रशयः स्वयम् ॥ १५ ॥**

ब्रह्मा के अतुल तपों से शेषशायी भगवान् ही प्रसन्न हो कर स्वयं ही समुद्र के उदर से प्रकट हुए ॥ १५॥

**चतुर्वेदमयोत्तुङ्गश्शृङ्गश्शृङ्गारिणा हरिः ।**
**रङ्गसंज्ञविमानेन सङ्गतः प्रणवात्मना ॥ १६ ॥**

चतुर्वेदमय ऊंचे-ऊंचे शृंगों से जिसका शृंगार हो रहा है जो कि सबका सव ॐ शब्द के आकार का वना हुआ है, ऐसे रंग नामवाले विमान में बैठे हुए ही आप प्रकट हुए थे ॥ १६॥

**समस्तोपनिषत्कन्दं सम्भूतं क्षीरसागरात् ।**
**प्रीतस्तमर्चयामास सत्यलोके सरोजभूः ॥ १७ ॥**

ब्रह्मा ने सारी उपनिषदों के मूलभूत रंगनाथ भगवान् को जो कि क्षीरसागर से प्रकट हुए थे, उन्हें सत्यलोक में ले जाकर उनका प्रसन्नता के साथ पूजन किया ।। १७।।

सत्रमारभत ब्रह्मा यत्र तत्प्रीतिकारणम् ।
तदर्थमाययुः सर्वे सुरासुरनरर्षयः ।। १८ ।।

एक बार ब्रह्मा ने भगवान् रंगनाथ को प्रसन्न करने के लिए सत्रयज्ञ का प्रारम्भ किया । उस यज्ञ में ब्रह्मा को प्रसन्न करने के लिए सुर, असुर, नर, ऋषि सभी आये ।। १८।।

ईश्वरस्सूर्यवंशानामिक्ष्वाकुर्मनुनन्दनः ।
इष्टिं पैतामहीं प्रापदिन्धानगुणविक्रमः ।। १९ ।।

उस यज्ञ में उज्ज्वल गुण और बलवाला, मनु का पुत्र सूर्यवंश का राजा इक्ष्वाकु भी आ पहुंचा ।। १९।।

तत्र संसेव्य रङ्गेशं भगवन्तं परात्परम् ।
इक्ष्वाकुस्तपसा कर्तुमियेष कुलदैवतम् ।। २० ।।

वहां इक्ष्वाकु ने सबके परतत्व रंगनाथ भगवान् की सेवा की और तप से रंगनाथ भगवान् को अपना कुलदेव बनाने का सङ्कल्प किया ।

विताने विरते सम्यग्विरिञ्चेन विसर्जितः ।
अयोध्यां रङ्गनिलयं ययौ ध्यायन् धरापतिः ।। २१ ।।

ब्रह्मा ने विधि के साथ यज्ञ की समाप्ति की इक्ष्वाकु राजा भी भगवान् रंगनाथ का ध्यान करता हुआ अयोध्या पुरी को चला आया ।। २१।।

अवाप्तुकामस्तं देवमरविन्दासनादसौ ।
तत्प्रसादफलाकांक्षी तपस्तेपे सुदुश्चरम् ।। २२ ।।

ब्रह्मा से रंगनाथ भगवान् मेरे हाथ आ जायें इस इच्छा से उन की प्रसन्नतारूप फल को चाहनेवाले इक्ष्वाकु ने घोर तपस्या की ।। २२।।

तत्तत्तपःप्रभावेन तं लब्ध्वा कुलदैवतम् ।
ईशं रङ्गपतिं साक्षादिक्ष्वाकुस्समामोदत ॥ २३ ॥

साक्षात् ईश्वर जो रंगनाथ भगवान् हैं, अपूर्व तप के प्रभाव से उन्हें कुलदेव प्राप्त कर इक्ष्वाकु परम प्रसन्न हुआ ॥ २३ ॥

इक्ष्वाकुप्रमुखैर्भूपैरिनवंश्यैः परः पुमान् ।
पंक्तिस्यन्दनपर्यन्तैरयोध्यायामपूज्यत ॥ २४ ॥

इक्ष्वाकु से लेकर दशरथ तक सूर्य के वंशधरों ने अयोध्यानगरी में भगवान् रंगनाथ का पूजन किया ॥ २४ ॥

रामेण स्वस्वरूपेण रावणप्राणहारिणा ।
विभीषणाय तद्रङ्गं प्रादायि सह लङ्कया ॥ २५ ॥

रावण को मारनेवाले रामचन्द्र भगवान् भी रंगनाथ के ही स्वरूप थे, उन्होंने विभीषण को लङ्का के राज्य के साथ रंगनाथ भगवान् को भी दे दिया ॥ २५ ॥

सैकते सह्यकन्यायाश्चन्द्रपुष्करिणीतटे ।
मध्येपद्धति तन्न्यस्तं रक्षसा नियमेषिणा ॥ २६ ॥

भक्त विभीषणजी कावेरी नदी की रेती में चन्द्रपुष्करिणी के किनारे लङ्का के मार्ग में भगवान् रंगनाथ को रख कर सन्ध्यावंदन आदि नित्यकर्म करने चले गये ॥ २६ ॥

निर्वृत्तनियमे तस्मिंस्तत्समुद्धर्तुमक्षमे ।
विषण्णे व्योमनीयं वागशरीरिण्यजृम्भत ॥ २७ ॥

सन्ध्यावन्दन आदि कर्मों से निवृत्त हो कर फिर रंगनाथ भगवान् को उठा कर लंका में ले जाना चाहा तो पूरा वल लगाने पर भी न उठा सके। अपनी यह दशा देख कर परम शोकित हुए विभीषण के लिए उसी समय आकाशवाणी हुई ॥ २७ ॥

**मद्विमानापरिस्पन्दान्मा विषीद विभीषण ।**
**ममैषा सह्यजामध्यमही हृद्या महीयसी ॥ २८ ॥**

हे विभीषण! मेरे विमान के न हिलने से तू शोक न कर। मुझे यह कावेरी की मध्यभूमि परम प्यारी लगती है ॥ २८॥

**तपस्यां सफलीकर्तुमाद्रिये धर्मवर्मणः ।**
**नवतीर्थनिविष्टानामृषीणामपि तादृशीम् ॥ २९ ॥**

धर्मवर्मा की तपस्या को सफल करने के लिए तथा वैसी ही नौ तीर्थों पर रहनेवाले ऋषियों की तपस्या को सफल करने के लिए मैं यहां रहना चाहता हूं ॥ २९॥

**एतस्मिन् पुलिनाभोगे भोगे गन्धवहान्धसः ।**
**समीक्ष्य तावकीं लङ्कां शयेयं योगनिद्रया ॥ ३० ॥**

कावेरी के इसी द्वीप पर मैं शेष के शरीर पर तेरी लङ्का को देखता हुआ योगमुद्रा में शयन करूंगा ॥ ३०॥

**इति प्रस्थाप्य तं लङ्कां भक्तिप्रह्वं विभीषणम् ।**
**प्रशास्त्यद्यापि रङ्गेशो भुवनानि चतुर्दश ॥ ३१ ॥**

परम भक्त विभीषण को इस प्रकार लङ्का में भेज कर अब भी श्रीरंगनाथ भगवान् चौदहों भुवनों का शासन कर रहे हैं ॥ ३१॥

**चन्द्रपुष्करिणीतीरे चञ्चत्पुन्नागभूषिते ।**
**रङ्गधाम्नि वसन् विष्णुः सप्तावरणभूषिते ॥ ३२ ॥**

चन्द्रपुष्करिणी के किनारे खिले हुए पुन्नाग के वृक्षों से सुहावने एवं सात परकोटों से विभूषित रंगधाम में रहते हुए रंगनाथ भगवान् ने—

**कन्यां चोलेन्द्रसिंहस्य कमलां भूविहारिणीम् ।**
**उपयेमे स रङ्गेन्दुर्निचुलापुरवल्लरीम् ॥ ३३ ॥**

चोलराज की लडकी के साथ विवाह किया जो भूमि पर बिचरने-वाली लक्ष्मी थी तथा निचुलापुररूपी वृक्ष की वल्लरी थी ॥ ३३॥

तत्परिग्रहतः प्राप भगवान् रङ्गनायकः ।
जगद्विमोहनो नाम्ना सौम्यजामातृनाथताम् ॥ ३४ ॥

उसके साथ विवाह कर लेनेके कारण, संसार को मोहित करनेवाले रंगनाथ भगवान् का नाम सौम्यजामातृनाथ पडा ॥ ३४॥

अष्टोत्तरशते धाम्नां विष्णो रङ्गं विशिष्यते ।
ग्रहेषु नवसु श्रेयान् नलिनीबान्धवो यथा ॥ ३५ ॥

जैसे नौ ग्रहों में कमल का प्यारा सूर्य विशेष महत्त्व रखता है उसी प्रकार विष्णु के १०८ धामों में श्री रंगधाम विशेष महत्त्व रखता है ॥ ३५॥

न केवलममुष्याज्ञा नाकिभिश्शिरसोह्यते ।
विहितार्चावताराणां देवानामपि मौलिभिः ॥ ३६ ॥

यह बात नहीं है कि इनकी आज्ञा का स्वर्गवासी देवता ही धारण करते हों किन्तु अन्य अर्चावतार भी इनकी आज्ञा को माथे पर चढाते हैं ॥ ३६ ॥

सप्तोत्तरशती विष्णुधाम्नां रङ्गपुरेशितुः ।
विहारोपवनाकारं विवृणोति समन्ततः ॥ ३७ ॥

बाकी विष्णु के एक सौ सात धाम तो रङ्गनाथ भगवान् के बिहार के उपवन के आकार को चारों ओर से प्रकट करते हैं यानी रङ्गधाम मुख्य है बाकी धाम भगवान् के वाग के समान है ॥ ३७॥

मुक्तभोग्यस्य करुणावरुणालयचक्षुषः ।
रङ्गिणो नाथनाथस्य महिमा वागगोचरः ॥ ३८ ॥

करुणा के अगाध समुद्र हैं नेत्र जिसके ऐसे रंगनाथ भगवान् जो स्वयं मुक्तों के भोग्य हैं इनकी महिमा वाणी से नहीं कही जा सकती ॥ ३८॥

इति सा तन्मुखाच्छ्रुत्वा गोदा रङ्गेशवैभवम् ।
पुष्यद्रागाऽभवत्तस्मिन् पूषणीवारविन्दिनी ॥ ३९ ॥

इस प्रकार गोदा रंगनाथ भगवान् के वैभव को पिता के मुंह से सुन कर रंगनाथ भगवान् में इस प्रकार अनुरक्त हुई जैसे सूर्य में कमलिनी अनुरक्त होती है ॥ ३९॥

नालीकनयना रङ्गनायकानुबुभूषया ।
अन्यभावान् जहाति स्म मन्यमाना तमाशये ॥ ४० ॥

कमलनयनी गोदा ने श्रीरङ्गनाथ को अपने अनुभवपथ में करने की इच्छा से हृदय में रंगनाथ का मनन करते हुए दूसरे भावों को छोड दिया ॥४०॥

ध्यायन्ती केशवं सा यत्तन्मयं जगदैक्षत ।
सर्वं विष्णुमयं विश्वमिति नासीत्प्रथा मुधा ॥ ४१ ॥

सब कुछ विष्णुमय है यह प्रथा झूठी नहीं थी, क्योंकि वह गोदा रङ्गनाथ भगवान् का ध्यान करती हुई सब कुछ रंगनाथमय देखने लगी ॥ ४१ ॥

गुरुं सविनयाऽवादीद् गोदा कौतूहलात्पुनः ।
कुलकन्याः प्रपद्येरन् कथं नाथमधोक्षजम् ॥ ४२ ॥

गोदा कौतुक से नम्रता के साथ फिर पिता से कहने लगी कि कुलकन्या किस तरह भगवान् को अपने पति के रूपमें प्राप्त कर सकती है ॥४२॥

इत्युक्तस्तनयामाह गुरुर्गोप्यस्स्मरातुराः ।
मार्गशीर्षव्रताचाराद्वल्लभं कृष्णमाप्नुवन् ॥ ४३ ॥

विष्णुचित्त ने उत्तर दिया कि काम से व्याकुल हुई गोपियों ने विधि के साथ मार्गशीर्ष का व्रत करके कृष्ण को पति के रूप में पा लिया था ॥४३॥

त्वमप्याचर तन्वङ्गि मार्गशीर्षे महद्व्रतम् ।
मुदितस्तेन भवतीं मुकुन्दोऽङ्गीकरिष्यति ।। ४४ ।।

हे पुत्रि! तू भी मार्गशीर्ष में इस वडे भारी व्रत का आचरण कर, जिसके प्रभाव से भगवान् प्रसन्न हो कर तेरा अङ्गीकार कर लेंगे ।।४४।।

इत्थं तातेन सन्दिष्टा गोदा गुरुवशंवदा ।
तद्व्रताचरणोपायं तर्कयामास मानसे ।। ४५ ।।

श्रीविष्णुचित्त ने गोदा को इस प्रकार समझाया । गोदा भी आज्ञा का पालन करनेवाली थी ही, अपने मन में मार्गशीर्ष के व्रत करने का उपाय सोचने लगी ।। ४५ ।।

गोपिकाभावमास्थाय तद्व्रतार्थप्रकाशकम् ।
प्रबन्धं प्राह सा गेयं त्रिंशद्गाथाभिरुज्वलम् ।। ४६ ।।

गोदा ने अपने आपको गोपी वना कर मार्गशीर्ष के व्रत के विधि-विधान आदि को दर्शानेवाला तीस गाथाओं का एक सुन्दर प्रवन्ध रचा जो भली भांति गाया जा सकता था ।। ४६ ।।

कामेन भूयसा भूयो गोदा चक्रे यथाश्रुतम् ।
गाथाद्विगुणसप्तत्या प्रबन्धं रसबन्धुरम् ।। ४७ ।।

इसके वाद गोदाने १४० गाथाओं का एक प्रवन्ध वनाया जैसा इसने पिता से सुना था वही पदार्थ रसीली गाथाओं के रूपमें इस में रख दिया था। इन गाथाओं के वनाने में गोदा को उत्कट इच्छाओं ने ही प्रेरित किया था और किसीने नहीं ।। ४७ ।।

कन्यया विष्णुचित्तस्य कलिताऽभूत्कृतिद्वयी ।
जन्यध्वखेदनोदाय जगदुज्जीवनाय च ।। ४८ ।।

विष्णुचित्त की कन्या गोदा ने ये दोनों रचनाएं ऐसी की जिनसे संसारतापों का नाश होता है और भवसन्तप्त संसारी जनों को उज्जीवन मिलता है बनाई भी इसी निमित्त से गई थी ।। ४८ ।।

अम्भोजनयना यत्नादनवाप्तमनोरथा ।
सङ्गे रङ्गेश्वरस्याशु बभूवोत्सुकमानसा ॥ ४९ ॥

कमलनयनी गोदा जब व्रत करने पर भी रङ्गनाथ भगवान् को न पा सकी तो रङ्गनाथ भगवान् के सङ्ग के लिये उसकी उत्सुकता बढने लगी ॥ ४९ ॥

कथं रङ्गपतिश्श्रीमान् मामकीं यौवनश्रियम् ।
दयालुरुररीकुर्यात् परिरम्भादिकर्मभिः ॥ ५० ॥

वह कौनसा उपाय होगा जिससे कि कृपालु रङ्गनाथ भगवान् मेरी इस युवावस्था की शोभासमृद्धि को अपने अविचल आलिंगन आदि के द्वारा स्वीकार करेंगे ॥ ५० ॥

इति चिन्तयमाना सा सुष्वाप कमलेक्षणा ।
स्वप्ने तमेव रङ्गेन्दुं यथावांछितमन्वभूत् ॥ ५१ ॥

एक दिन इस तरह विचार करती-करती सो गयी तो स्वप्न में रङ्गनाथ भगवान् उसे उसी तरह आकर मिले जैसा कि वह चाहती थी ॥ ५१ ॥

साक्षादनुभवन्तीव रमणी रङ्गनायकम् ।
प्रबुद्धा सहसैवासीद्विप्रयोगसमाकुला ॥ ५२ ॥

यह नहीं कि स्वप्न में स्वप्न की तरह रङ्गनाथ भगवान् का अनुभव किया हो किन्तु इस तरह अनुभव किया जैसे जाग्रत में किया करते हैं, जब जगी तो अकेली वियोगिनी ही रह गयी तथा इसे वियोग सताने लग गया ॥ ५२ ॥

तदात्व एव तन्वङ्गीं व्यधत्त विषमायुधः ।
विविधाशुगविक्षेपविह्वलीकृतचेतनाम् ॥ ५३ ॥

उसी समय कामदेव ने अपने तरह तरह के तीर चला कर दुबलीसी गोदा को व्याकुल कर डाला ॥ ५३ ॥

अरविन्ददृशोऽकस्मादकम्पत वपुर्लता ।
विषमायुधकोदण्डविस्फारश्रवणादिव ॥ ५४ ॥

कमलनयनी का पतलासा शरीर अचानक ही कांपने लग गया मानों कामदेव के धनुष की टंकार सुनने से कांप रहा हो ॥ ५४ ॥

प्रबोधमेत्य यद्गोदा नापश्यद्रङ्गनायकम् ।
तच्चित्तकुहरे तस्या लग्नो नूनमजायत ॥ ५५ ॥

ऐसा मलूम होता है कि गोदा के जागते ही रंगनाथ भगवान् उसके हृदय की गुफा में जा छिपे तव ही उसे जागने पर नहीं मिले यदि ऐसा नहीं तो वे कहां जाते तथा क्यों न मिलते ॥ ५५ ॥

आहारे न विहारे च हारादिपरिकर्मसु ।
बभूव विरहार्तायास्तस्याः किमपि कौतुकम् ॥ ५६ ॥

गोदा विरह से दुःखी थी अतएव भोजन विहार तथा वस्त्रादि धारण एवं हार आदि आभूषण धारण करने में उसकी रुचि नहीं थी ॥ ५६ ॥

अमृतांशुः करैर्नूनमसिताक्षीमबाधत ।
विधित्सुस्तन्मुखेन्दुश्रीविजितस्तत्प्रतिक्रियाम् ॥ ५७ ॥

अमृतमय किरणोंवाला चन्द्रमा अपनी किरणों से इस प्रकार गोदा को सता रहा था मानो पहिले जो गोदा के मुखमण्डल ने चांदकी शोभा को जीत रखा था उसका वदला निकलना चाहता हो ॥ ५७ ॥

ततो गुरुजनाद्भीता विनेतुं विरहव्यथाम् ।
साकमालीजनैर्गोदा चम्पकाराममासदत् ॥ ५८ ॥

गोदा अपनी दशा वताने में माता पिता से डरती थी घर में विरह के दिन नहीं जाते थे इस कारण विरह का दुःख भुलाने के लिए सखियों के साथ चम्पकवन चली गई ॥ ५८ ॥

माकन्दसुषुमाकन्दं विकस्वरपिकस्वरम् ।
कङ्केलिजनकं केलिमत्कृताऽलिचमत्कृतिम् ॥ ५९ ॥

यह बाग मीठे मीठे सुहावने आमों की शोभा का मूलस्थान था, बडी बडी ऊंची स्वर से कोयलें कुहक रहीं थी, कंकेलि का तो पैदा ही करनेवाला था, इतने पर भी अठकेलियां करते हुए भौंरों की गुन्जारों ने एक अद्भुत चमत्कार फैला रखा था ॥ ५९ ॥

रसालतालहिन्तालकृतमालतमालिनम् ।
उदग्रपूगपुन्नागनागकेसरकेसरम् ॥ ६० ॥

आम ताल और हिंगोर के अनेकों ही वृक्ष इसमें थे ; तमाल तो माला की तरह चारों ओर से घेरे हुए थे ; बडे बडे अनेक ऊंचे-ऊंचे सुपारी के वृक्ष थे ; पुन्नाग नागकेसर और केसर के भी पौदे थे ॥६०॥

आसाद्य चम्पकारामम् आलीपरिषदावृता ।
अखिद्यत भृशं सुभ्रूरसह्यविरहव्यथा ॥ ६१ ॥

अच्छी भ्रुकुटिवाली गोदा सखियों के साथ ही साथ चम्पकवन में पहुंच कर दुस्सह विरह के अकथनीय दुःख से एकदम दुःखी हुई ॥६१॥

प्राप गोदा यदारामं वियोगज्वरशान्तये ।
प्रशमाय कृशानोस्तदभूत्प्राज्याज्यसेचनम् ॥ ६२ ॥

वियोगिनी गोदा वियोग का ज्वर शान्त करने के लिये जिस बाग को गयी थी वही बाग शान्ति के बदले वियोग की आग को प्रचण्ड करने में प्रभूत घी का काम कर गया ॥ ६२॥

गोदाया यद्वियोगाग्निर्दिदीपे मन्दवायुना ।
उदपादि ततो वायोरुषर्बुधसहायता ॥ ६३ ॥

गोदा के वियोग की अग्नि बाग की मन्द मन्द हवा से प्रज्वलित हो गयी तभी तो हवा सदा ही आगका सहायक कहलाता है । वियोगाग्नि

का भी वाग के वायु ने सहायता दी इस पर कवि उत्प्रेक्षा करते हैं कि इसी कारण वायु का नाम अग्नि-सहायक पडा है ॥ ६३॥

साम्प्रतं चन्दनारामः प्राप्तो यत्तदसाम्प्रतम् ।
अविज्ञानानया तन्व्या मन्मथं प्रसवायुधम् ॥ ६४ ॥

वियोग से दुःखी हो जो चन्दनवन में गयी थी वह इस समय करना नहीं चाहिये था। भोली गोदा को यह पता नहीं था कि कामदेव फूलों के ही तीर चलाता है ॥ ६४॥

बाला च मारवीरास्त्रशालामारामवाटिकाम् ।
कोलाहलं कोकिलानां हालाहलममन्यत ॥ ६५ ॥

पुष्पवाटिका को बालिका गोदा ने विश्वविजयी कामदेव की अस्त्रशाला समझा और इसमें होनेवाले कोयलों के कोलाहल को उसके विष माना ॥ ६५॥

मन्दादपि मरुत्पोतस्पन्दात्साऽऽपदलं व्यथाम् ।
मन्दारकलिकाशीधुस्यन्दाहरणतुन्दिलात् ॥ ६६ ॥

छोटे से हवा के झोके से गोदा को अत्यन्त क्लेश होता था क्यों कि वो झोखा मन्दार वृक्ष की कलियों के रसके कणों के मिलने से पूर्णपरिपुष्ट हो रहा था ॥ ६६॥

कृशेन वपुषा तस्याः कृतं विरहपाण्डुना ।
प्रतिपद्रजनीनाथकलाकेलिविडम्बनम् ॥ ६७ ॥

दुस्सह विरहवेदना से पीले पडे हुए गोदा का शरीर प्रतिपदा के चांद की कलाओं का सदृश बना। यह वियोगिनी गोदा की दशा थी ॥ ६७॥

गोदाया विष्णुविश्लेषवेदनानोदनैषिणी ।
कस्यापि भुवि विप्रस्य कन्याभावमवाप या ॥ ६८ ॥

इत्थमुत्तप्यमानां तां सा कृशाङ्गीमभाषत ।
अनुग्रहाख्या मुरजिच्चामरग्राहिणी सखी ॥ ६९ ॥

गोदा की वियोगव्यथा को हरने की इच्छा रखनेवाली जो भूमण्डलपर किसी ब्राह्मण की लडकी बन कर अवतीर्ण हुई थी वही भगवान् के चमर को ग्रहण करनेवाली अनुग्रहा सखी इस प्रकार वियोग से जली हुई दुबली पतली उस गोदा से बोली ॥ ६८, ६९ ॥

श्रुणोमि त्वमपि स्नेहाद्यदि सत्यमभाषथाः ।
किं न पृच्छति वृत्तान्तं समदुःखसुखो जनः ॥ ७० ॥

कि हे गोदा! जो तू प्रेम से अपनी सच्ची-सच्ची बातें कहे तो मैं सुनने के लिये तैयार हूं, जो अपने प्रेमी के सुख में सुखी और दुःख में दुःखी होता है वह सब हाल पूछता है तथा उससे कुछ छिपाया भी नहीं जाता ॥ ७० ॥

चिन्ता मनसि जार्गात सन्तापः कोऽपि वर्ष्मणि ।
त्वं तावत् कथयस्वाऽलि रन्ता कस्तव वर्तते ॥ ७१ ॥

तुम्हारे मन में कुछ चिन्ता जाग रही है, शरीर में अवश्य कोई न कोई सन्ताप है। ए सखी! वता तो सही तेरा प्रेमी कौन है जिसके वियोगमें तेरी यह दशा हुई है ॥ ७१ ॥

भवद्वपुषि लावण्यशेषः किं कृशिमोदयः ।
तल्पे किसलयानल्पे शेषे किं वरवर्णिनि ॥ ७२ ॥

आप इतनी दुबली हो गयी हैं कि आप के शरीर में लावण्य को छोड और कुछ शेष ही नहीं रहा है और फिर आप वहुत से पल्लवों की शय्या पर क्यों सो रही है ॥ ७२ ॥

मन्दोदरैर्गन्धवहैरिन्दोरपि करोत्करैः ।
कन्तोस्तव कथं बाणसन्दोहैः कम्पते मनः ॥ ७३ ॥

मन्द-मन्द हवा के झोकों से तथा चांद की किरणों से एवं कामदेव के बाणों की निरन्तर वर्षा से तेरा मन क्यों कांप रहा है ॥ ७३ ॥

साकं सखीजनैस्तन्वि वञ्चयित्वा गुरूनपि ।
धन्यः को वा युवाऽध्यास्ते तावकं रमयन् मनः ॥ ७४ ॥

तेरे संग की हमझोलियों से तथा माता पिता से भी छिप कर तुझे रमा कर तेरे मन में छिपा बैठा है वह युवा धन्य है पर वह है कौन? ॥ ७४ ॥

इति सख्याऽनुग्रहया पृष्टा गोदा ह्रियाऽवदत् ।
अन्यो नारायणान्नास्ते धन्यो रमयिता हृदि ॥ ७५ ॥

गोदा इस प्रकार अनुग्रहा सखी के पूछने पर कुछ लज्जित हो कर बोली कि नारायण को छोड दूसरा कोई धन्य पुरुप मेरे हृदय में बैठ कर रमण करनेवाला नहीं है ॥ ७५ ॥

चित्तं तदीयमधुना सक्तं श्रीपुरुषोत्तमे ।
जानन्ती मधुरं गोदां प्रत्यवोचदनुग्रहा ॥ ७६ ॥

अनुग्रहा पहिले से ही यह जानती थी कि रंगनाथ भगवान् में गोदा का चित्त आसक्त है; इस कारण अत्यन्त ललित वाणी से बोली ॥ ७६ ॥

सत्यमात्थ मयाऽज्ञायि गोदे कस्ते मनोहरः ।
आलिख्यन्ते मया पटयां हरयोऽर्चावतारिणः ॥ ७७ ॥

हे गोदे! तूने सत्य कहा है पर यह तो बता कि वह कौन स्वरूप है? मैं पट पर अर्चावतारी भगवानों के चित्र खींचती हूं; तू सावधानी के साथ देख; उन्हींमें तेरा मनमोहन मिल जायगा ॥ ७७ ॥

इत्यनुग्रहया सख्या पटे सम्यक् प्रदर्शिते ।
आलोक्य गोदा रङ्गेशं व्रीडयाऽऽसीदवाङ्मुखी ॥ ७८ ॥

इस प्रकार सखी अनुग्रहा ने सब अर्चावतारों के चित्र खींच कर दिखा दिये ; तब रङ्गनाथ को देखते ही गोदाने लज्जा के मारे नीचा मुंह कर लिया ॥ ७८ ॥

मनोज्ञं रङ्गधामानं मत्वा तच्चित्तहारिणम् ।
अपत्रपानतमुखीमाह गोदामनुग्रहा ॥ ७९ ॥

अनुग्रहा का निश्चय और भी दृढ हो गया कि यह रंगनाथ पर आसक्त है इसका चित्तचोर रङ्गनाथ ही है, उस समय लज्जा से नीचे को मुंह किये हुए बैठी गोदा से अनुग्रहा कहने लगी ॥ ७९ ॥

यदि विश्वसनीयाऽहं यद्यास्ते मय्यनुग्रहः ।
कथयस्व यथावृत्तं गोप्तुं मामालि नार्हसि ॥ ८० ॥

जो मुझ पर तेरा विश्वास हो या मुझ पर तेरा प्रेम हो तो मुझे जो बात जैसे हुई हो वैसे ही सुना दे, मुझ से कुछ भी छिपाना न चाहिये ॥ ८० ॥

भावबन्धोऽस्ति चेत्प्रौढस्तव श्रीरङ्गधामनि ।
अचिरादेव तं देवमानेष्यामि त्वदन्तिकम् ॥ ८१ ॥

यदि रङ्गनाथ भगवान् से तेरा उत्कट प्रेम है तो मैं बहुत ही शीघ्र उस देव को तेरे पास ला दूंगी ॥ ८१ ॥

इति कर्णामृतं सख्याश्श्रुत्वा वाक्यं सुलोचना ।
हारं मन्दस्मितव्याजादर्पयन्तीव साऽवदत् ॥ ८२ ॥

सुनयनी गोदा को सखी के ये वाक्य ऐसे मालूम हुए मानो कानों में अमृत डाल दिया हो, बदले में मन्दहास किया यह ऐसा लगता था मानो खुशखबरी में हार भेट कर रही हो ; और अनुग्रहा से बोलीकि ॥ ८२ ॥

यत्त्रातुं हरिविरहव्यथाकुलां मां
प्रायस्त्वं प्रियसखि भूतलेऽवतीर्णा ।
तज्जाने मदभिमतार्थयोजनायां
तज्जायां तव करवर्ति जीवितं मे ॥ ८३ ॥

हे सखि ! मुझे ऐसा मालूम होता है कि भगवान् के वियोग से घबराई हुई मुझे बचाने के लिये ही तूने भूमि पर अवतार लिया है ; मैं अपनी इष्टसिद्धि की योजना में तुझे श्री लक्ष्मी समझती हूं और तो क्या तेरे हाथों ही मेरा जीवन है ; मुझे बचा ॥ ८३ ॥

प्रत्यक्षं कलयसि मामकीमवस्थां
जानीषे सखि समयोचितं वचश्च ।
रङ्गेन्दोः कथय यथावदित्यमन्दं
सन्दिष्टोदचलदनुग्रहा प्रणम्य ॥ ८४ ॥

तू मेरी दशा अपनी आखों से देख रही है एवं तू समयोचित बोलना भी जानती है ; अतः मेरी सब दशा रङ्गनाथ भगवान् को शीघ्र ही जाकर सुना दे । यह सुन कर अनुग्रहा ने प्रणाम किया और रङ्गनाथ भगवान् के पास चली गयी ॥ ८४ ॥

दशमस्सर्गः समाप्तः ।

———

# एकादशस्सर्गः

रङ्गभूपतिरथैकदा रणद्भृङ्गकोकिलकदम्बसंकुलम् ।
प्राप पुष्पसमयोत्सवोचितं बाह्यकेलिवनमध्यमण्डपम् ॥ १ ॥

जो भौंरों की गुंजार से गूंज रहा था, कोयलों की अनेकों झुण्ड मीठी कूक लगा रही थी वह बाग बाहिर था तथा विहार के काम में ही आया करता था। उसी बाग के बीच में एक सुन्दर मण्डप बना हुआ था जो वसन्तोत्सव मनाने के लिये सर्वथा उचित था, एक दिन श्रीरङ्गनाथ भगवान् इसी मण्डप पर आ पहुंचे ॥ १ ॥

तत्र मध्यदिवसोचिताः क्रियास्तादृशीरसदृशीस्समाप्य सः ।
रङ्गभूपतिरुपह्वरेऽवसत्सान्तरङ्गपरिमेयकिङ्करः ॥ २ ॥

यहीं रङ्गनाथ भगवान् ने मध्याह्नकाल की विशिष्ट क्रियाओं को पूरा किया; पीछे कुछ अन्तरङ्ग सेवकों के साथ एकान्त में विराजमान हुए ॥ २ ॥

वातपोतपरिधूतमाधवीचूतचम्पकनमेरुमेदुरम् ।
तत्र कन्दलितपुष्पसायकं पश्यतिस्म स वसन्तवैभवम् ॥ ३ ॥

केलिवन में वसन्त छाया हुआ था। हवा की छोटीसी लहर से माधबीलताएं कांप रही थीं। आम की टहनियां हिल रही थीं। चम्पक हिल रही थीं। क्यों कि ये परम कोमल होती है, जरासा हवा का झोंका पडना ही इनके लिये काफी होता है। यह वसन्तवैभव कामं को पुष्ट कर रहा था ॥ ३ ॥

तत्र सर्वसुमनोमनोहरं शोभमानवनमालिकाञ्चितम् ।
पञ्चबाणजनकं जनार्दनः स्वं यथा परमबोधि माधवम् ॥ ४ ॥

श्रीरङ्गनाथ भगवान् ने अपने ही सदृश माधवमास अर्थात् वैशाख महिने को भी देखा क्यों कि जैसे स्वयं रङ्गनाथजी सुमनों यानी देवताओं के मन हरने वाले हैं। माधवमास भी सुमनों से यानी फूलों से मनोहर हैं। जैसे श्रीरङ्गजी वनमाला पहने शोभमान है वैसे ही यह माधवमास भी वनों की पंक्तियों से शोभायमान है, जैसे श्रीरङ्गनाथजी कामदेव यानी प्रद्युम्न के जनक हैं वैसे ही यह माधवमास भी कामजनक है और फिर उनके ही समान इसका भी नाम माधव है ॥ ४ ॥

**मन्दमारुतरथास्थितस्तदा मत्तकोकिलमनोज्ञकाहलः ।**
**मन्मथस्सह वसन्तमन्त्रिणा माधवस्य पुरतोऽवसन्मुदा ॥ ५ ॥**

उस समय कामदेव मन्दमारुतरूपी रथ पर बैठा हुआ मदोन्मत्त कोकिलों की कूक से सुन्दर काहली वजवाता हुआ वसन्तमन्त्री के साथ आनन्द से रङ्गनाथ भगवान् के आगे आ गया ॥ ५ ॥

**चिन्तयन् किमपि वञ्चिताशयः पञ्चभिश्शफरकेतुहेतिभिः ।**
**आस्त दुस्सहवियोगवेदनाक्लान्तमूर्तिररविन्दलोचनः ॥ ६ ॥**

कुछ सोचते हुए कमलनयन रङ्गनाथ भगवान् ऐसे मालूम होते थे कि काम ने इसका हृदय ठग लिया है। कामदेव ने अपने पांचों तीर चला दिये हैं। दुस्सह वियोग के दुःख से शरीर मुरझाया हुआ था ॥ ६ ॥

**प्राप्य केलिविपिनं तिरोहिता कुत्रचित् व्रततिमन्दिरान्तरे ।**
**विष्णुचित्ततनयाप्तदूतिका रङ्गराजसमयं व्यलोकत ॥ ७ ॥**

विष्णुचित्त की लडकी गोदा की सुयोग्य दूती जो अनुग्रहा थी, वह रङ्गनाथ के केलिवन में पहुंच कर किसी लतागृह में छिप कर उनके पास पहुंचने का मौका देखने लगी ॥ ७ ॥

**सव्यथं प्रसवबालपल्लवप्रस्तरोदरलुठत्कलेवरम् ।**
**रङ्गनायकमवेक्ष्य तादृशं मानसे किमपि सा व्यशङ्कत ॥ ८ ॥**

उस समय रङ्गनाथ भगवान् फूल और कोमल पल्लवों के बिस्तरे पर दुःख के साथ करवटें बदल रहे थे। ऐसे रङ्गनाथ भगवान् को देखकर अनुग्रहा के मनमें शङ्का उत्पन्न हुई ॥ ८॥

**विप्रयोगशिखितापविह्वलं पुष्पतल्पपतितं मुहुर्मुहुः ।**
**याति मर्दिततमालपल्लवप्रौढिमस्य किमिदं कृशं वपुः ॥ ९ ॥**

वियोग की आग की जलन से व्याकुल हैं इस कारण फूलों की सेज पर बारंबार करवटें लेते हैं। शरीर इतना दुबला हो गया है कि वह भी मसले हुए तमाल के पल्लव की शोभा को धारण किये हुए हैं, इनका शरीर इतना कृश क्यों है? ॥ ९॥

**चिन्तयत्किमपि चित्तमादरान्निर्निमेषनिभृते च लोचने ।**
**वक्त्रमुत्पुलकगन्धमङ्गकं स्विन्नमस्य पुनरात्तसाध्वसम् ॥ १० ॥**

प्रेम से इनका मन किसीका स्मरण कर रहा है, आखें निर्निमेष कर अपने लक्ष्य पर ठहरी हुई मालूम होती है, चेहरे पर पुलक झलक रहा है, शरीर पर पसीना आया हुआ है एवं कुछ कंपकंपी मालूम होती है ॥ १०॥

**आत्तसात्त्विकविकारचारुणा मानसे ध्रुवमनेन रङ्गिणा ।**
**काचन प्रियतमाऽनुभूयते मामकी किमु सखी पराऽथवा ॥ ११ ॥**

ये रङ्गनाथ भगवान् सात्विक विकार से सुन्दर लग रहे हैं, इससे यह निश्चय होता है कि मन में किसी प्यारी का अनुभव कर रहे हैं क्या मेरी सखी है या और कोई है? ॥ ११॥

**अस्य भावमवगम्य तत्त्वतः तादृशं प्रियसखीवचस्ततः ।**
**तद्दशामपि निवेदयेयमित्याप सन्निधिमनुग्रहा हरेः ॥ १२ ॥**

पहले मैं यथार्थरूप से इनके आशय को मालूम कर लूँ इसके बाद अपनी सखी का सन्देश तथा दशा को सुनाऊं। ऐसा सोचकर भगवान् के समीप उपस्थित हो गयी ॥ १२॥

विष्णुचित्ततनयानियोगतो धन्विनूतनपुरादिहागता ।
इत्युदीर्य विनयेन रङ्गिणः प्राणमच्चरणयोरनुग्रहा ॥ १३ ॥

मैं श्रीविष्णुचित्त की लडकी की आज्ञा से धन्विनवपुर से यहां आई हूं, अनुग्रहा ने ऐसा कह कर नम्रता के साथ श्रीरङ्गनाथ भगवान् के चरणों में प्रणाम किया ॥ १३ ॥

तन्निशम्य वचनं तदा हरिस्सुभ्रुवश्श्रुतिपुटाद्भुतामृतम् ।
उत्थितः कुसुमकेलिसंस्तरादास्त मन्दमहिपत्यपाश्रयः ॥ १४ ॥

भगवान् रङ्गनाथ को यह वचन ऐसा मालूम हुआ मानों कानों की राह से अमृत ढाल दिया गया हो। सुनते ही फूलों के सेज से उठे और शेषभगवान् के सहारे बैठ गये ॥ १४ ॥

अद्य दक्षिणविलोचनाञ्चलस्पन्दनं सफलमित्यनुस्मरन् ।
तामवोचदथ गोदया समं विष्णुचित्तसुमतिस्सुखी किमु ॥ १५ ॥

मन में सोचने लगे कि मेरी जो दाहिनी आंख फडकती थी वह अब सफल हो गयी। पीछे अनुग्रहा से पूछने लगे कि गोदा–समेत सुमति विष्णुचित्त सुखी है न? ॥ १५ ॥

भट्टनाथदुहितुस्त्वमन्तिकादागता मम विषण्णमाशयम् ।
नन्दयस्यनुपमाङ्गि साम्प्रतं तादृगागमनकारणं वद ॥ १६ ॥

ए सुन्दरी अनुग्रहे! तू विष्णुचित्त को लडकी के पास से आकर इस समय मेरे दुःखी हृदय को आनन्द दे रही है, सो तू बता कि तेरे आगमन का ऐसा क्या कारण है, जिस तेरे आगमन से मुझे सुख हो रहा है ॥ १६ ॥

रङ्गिणैवमनुरागिणेरिता सा बभाण सह गोदया सुखी ।
देव तावकदयाविशेषतो विष्णुचित्तसुमतिः समेधते ॥ १७ ॥

प्रेमी श्रीरङ्गजी ने अनुग्रहा से इस प्रकार पूछा तो वह बोली कि हे देव! आपकी उन पर अच्छी दया है, उसीसे गोदा समेत सुमति विष्णुचित्तजी सब प्रकार सुखी हैं ॥ १७ ॥

**स्वालकोदरनिवासवासितां प्राभृतं प्रणतिभिस्सहस्रजम् ।**
**प्राहिणोदथ च सन्दिदेश सा मन्मुखात् प्रणयनिर्भरं वचः ॥ १८ ॥**

आप के लिए अनेक प्रणाम कहते हुए यह परमसुगन्धित माला दी है। पहले तो इसमें फूल ही परमसुगन्धित लगाये थे, दूसरे अपने सिर के वालों में रख कर इसे और भी परमसुगन्धित कर दिया है। इसे लीजिये, इसके साथ कुछ प्रेम का भरा हुआ संवाद भी कहला भेजा है, वह भी सुनिये ॥ १८॥

**एकदा निशि विहारसंस्तरे यस्त्वयाऽक्रियत सङ्गमोत्सवः ।**
**सोऽद्य नाल्पदिवसैर्व्यथामयो रङ्गनायक मयाऽनुभूयते ॥ १९ ॥**

हे रंगनाथ भगवन्! एक दिन रातको जो आपने मेरी विहार की शय्या पर सङ्गम का उत्सव किया था वह इस समय मुझे बहुत दिनों से दुःखदायी हो रहा है ॥ १९॥

**त्वद्वियोगजनितोग्रवेदनानोदनाय सहसा सखीजनैः ।**
**कल्पितप्रसवतल्पशायिनी चम्पकोपवनसीम्नि ताम्यति ॥ २० ॥**

आपके वियोग से पैदा हुई तीव्र वेदना को दूर करने के लिये सखीजनों को साथ ले बिना सोचे विचारे चम्पकवन को चली गयी। वहीं फूलोंकी सेज बिछवा कर उस पर पडी सन्तप्त हो रही है ॥ २०॥

**या सरोजनयना शुचिस्मिता वासवेभपतिमस्तकस्तनी ।**
**वल्लकीस्वनमनोज्ञभाषिणी फुल्लपद्मरुचिधूर्वहानना ॥ २१ ॥**

जो कमलनयनी थी जिसका मन्दमुसकान बडा ही शोभायमान लगता था, जिसके स्तन ऐरावत के माथे के समान शोभित होते थे, जिसकी कण्ठध्वनि सितार के स्वर से भी मीठी थी, जिस के खिले हुए मुख-कमल के सामने विकसित हुआ सहस्रारविन्द भीत होता था ॥ २१॥

या प्रसृत्वरविशालभास्वरस्फारवीक्षणपुरस्कृतस्मरा ।
सान्द्रयौवनविधूदयोल्लसत्कान्तिसिन्धुजलजाभकन्धरा ॥ २२ ॥

जिसके चारों ओर फैलनेवाले तथा खूब देदीप्यमान सघन दृष्टि पात के आगे कामदेव खडा रहा करता था, जिसकी गरदन यौवनरूपी चांद के सघन उदय से उमडे हुए सुन्दरता के समुद्र में उत्पन्न हुए शंख के समान थी ॥ २२॥

या स्मरस्य महिमाब्धिचन्द्रिका चक्षुषोरमृतवर्तिका नृणाम् ।
अङ्गनानिवहशिल्पकल्पनानैपुणीसफलता स्वयंभुवः ॥ २३ ॥

जो कामदेव की महिमा के समुद्र की चान्दनी थी, मनुष्यों के नेत्रों के लिए अमृत की सलाई थी तथा यह वात भी वह बताती थी कि स्त्रियों को बनाते-वनाते ब्रह्मा स्त्री की रचना में कहां तक सफल हुआ ॥ २३ ॥

साऽद्य बाष्पसलिलाविलेक्षणा स्वान्ततान्तिविगतस्मितांकुरा ।
दुस्सहा लघुवियोगपावकज्वालदग्धकुचहारमौक्तिका ॥ २४ ॥

इस समय उसकी आखें आंसुओं के पानी से गदली हो रही हैं, हृदय में सदा ही ग्लानि बनी रहती है, जिससे होठों पर मन्दमुसकान कभी आती ही नहीं । थोडे दिन का हो तो वात दूसरी थी इतने भारी आपके वियोग को नहीं सह सक रही है, इस वियोगरूपी आग की ज्वालाएं सदा ही उसके हृदय में दहका करती हैं जिससे कुचों पर पडे रहनेवाले हार के मोती भी जल कर भस्म हो गये हैं ॥ २४॥

उत्कहंसरवगद्गदस्वरा दुश्शकश्वसितदूषिताननना ।
कामभूपतिनिशातसायकस्तोमनिर्घृणनिखातविग्रहा ॥ २५ ॥

उत्कण्ठित हंस के शब्द के समान उसका गद्गदस्वर हो गया है, हृदय से इतनी दीर्घ उष्णश्वास निकलती हैं जिससे इकवारगी ही चेहरा वदल गया है, राजा काम ने अपने वहुत से पैने तीरों से निर्दयता के साथ उसके शरीर को गोद रखा है ॥ २५॥

**विप्रयोगशिखितापशोषतो बुद्बुदामलमृणालभूषणा ।**
**देव तावकपदाम्बुजेप्सया प्रासवैः प्रहरमाणमायुधैः ।**
**प्राञ्जलिः प्रणयपूर्वया गिरा याचते मम सखी मनोभुवम् ।। २६ ।।**

आपके वियोगरूपी अग्निकी तपन से सूख गई है, अतएव ताप की शान्ति के लिए जो मृणाल का भूषण पहने हुए हैं, उसमें भी फफोले उठ आये हैं ।

हे देव! जो कामदेव फूलों के तीरों को गोदा पर वर्षाता है गोदा आपके चरण पाने की इच्छा से उसी काम से हाथ जोड कर नम्रता पूर्वक आपके चरणों का समागम मांगती है ।। २६ ।।

**नाथ कौसुमपरागमण्डलैः केलिवेश्म विरचय्य मे सखी ।**
**तद्विलोपविधयेऽभिवाञ्छते त्वत्समागममुदारविभ्रमा ।। २७ ।।**

हे नाथ! बहुतसी फूलों की धूलि इकट्ठी करके उससे मेरी सखी लीला घर वनाती है। फिर वह धूलि मिटाने के लिए आपका समागम चाहती है ।। २७ ।।

**यां पुरा समवलम्ब्य भावनां त्वां ययुर्यदुधुरीणगोपिकाः ।**
**तां तदाकृतिमपि प्रपद्य सा त्वत्पदाब्जमधुना युयुक्षते ।। २८ ।।**

हे कृष्ण ! पहले जिस भावना का अवलम्व लेकर गोपियां तुझे प्राप्त हुई थीं, इस समय गोदा भी उसी भावना के साथ स्वयं गोपी वन कर आपके चरणकमलों से संयुक्त होने की इच्छा करती है ।

**तत्र कुन्दतरुशृङ्गसङ्गतं त्वां विभाव्य भगवन् सरस्तटे ।**
**अञ्जलिं शिरसि सा निबध्नती याचते त्वदपनीतमंशुकम् ।। २९ ।।**

तलाव के किनारे आप को कदम के वृक्ष की चोटी पर बैठा हुआ मान कर हाथ जोडती हुई दोनों हाथों को ऊपर करके अपने उठाये हुए वस्त्रों को आप से मांग रही है।। २९ ।।

**तत्र सास्रनयना कथञ्चन त्वत्समागममहोत्सवोत्सुका ।**
**मौक्तिकेन विरचय्य मण्डलं सङ्गमाख्यशकुनं निरीक्षते ॥ ३० ॥**

वहां कभी कभी आपके समागम के उत्सव की बाट जोहती हुई आंखों में आंसू भर कर किसी तरह मुक्ताओं का मण्डल बना कर सङ्गम नामक शकुन देखती है ॥ ३० ॥

**वक्ति सा प्रति वनप्रियान् प्रियस्यागमार्थमिह कूजतोऽद्य मे ।**
**सत्फलान्युपहराम्यतो वनादन्यथा यदि विवासयेय वः ॥ ३१ ॥**

वन में जाकर कोयलों से कहती है कि जो मेरे प्यारे के आने के लिए कूजती हो तो अच्छे-अच्छे फल खिलाऊंगी ; नहीं तो इन वनों से तुम सबको निकाल बाहर करूंगी ॥ ३१ ॥

**अन्वभाविषत तत्र सुप्तया गोदया तव करग्रहक्रियाः ।**
**कौतुकग्रथनलाजमोचनग्रावपादविनिवेशनादयः ॥ ३२ ॥**

गोदा ने स्वप्न में आप के साथ पाणिग्रहण संस्कार का अनुभव किया था। उसे कङ्कणबन्धन, लाजहवन, सप्तपदी तथा शिला के ऊपर पांव रखना आदि सब का अनुभव उसी स्वप्न में हुआ था ॥ ३२ ॥

**सेक्ष्य हंसमधिवापि कौतुकात्पाञ्चजन्यमनसा तु पृच्छते ।**
**पद्मगन्धि घनसारगन्धि वा स्वादु किञ्च महितं प्रियाननम् ॥ ३३ ॥**

बावली में हंसको देख उसे पाञ्चजन्य मानकर उससे पूछती है कि हे पाञ्चजन्य ! प्यारे के सुन्दर मुंह से कमलों कीसी सुगन्ध निकलती है या भीमसेनीकपूर की सुगन्धि निकलती है, तुम्हें प्यारा क्या लगता है ॥ ३३

**अम्बुवाहनिकुरुम्बमम्बरे वीक्ष्य देव तव कान्तिसुन्दरम् ।**
**हन्त संदिशति जातकौतुका स्वां दशां कथयितुं तवाग्रतः ॥ ३४ ॥**

जब आकाश में मेघमाला थिरकता है जो देखने में आपके शरीर की शोभा के समान प्रतीत है, तब और तो क्या उसके आगे अपनी

दशा कहने लग जाती है कि इस मेरी दशा को भगवान् रङ्गनाथ से जाकर कहना ॥ ३४ ॥

रङ्गिकेल्युपवनेषु वेङ्कटाराममभूधरमुखेषु धामसु ।
मां वियोगपरिदूनमानसां न्यस्यतेत्यभिदधाति सा सखीः ॥ ३५ ॥

वियोग से तपी हुई मुझे रङ्गनाथ के खेल के उपवनों में तथा वेङ्कटेश भगवान् के उपवन के पहाड आदि धामों में रख दो। मेरी सखी गोदा अपनी सखियों से इस प्रकार कहती है ॥ ३५ ॥

कम्बुना निजकराग्रवर्तिना रङ्गराडपरितृप्तमानसः ।
मामकञ्च करकम्बुमीहते यद्युपैतु मम गोचरं दृशोः ॥ ३६ ॥

जो अपने हाथमें रहनेवाले कम्बु (शंख) से तृप्त न हो कर रङ्गनाथ भगवान् मेरा करकम्बु (वलय) चाहते हों तो वे मेरे नेत्रों के सामने आ जाय। वलय कडूला या कङ्कण तथा शंख ये कम्बुके अर्थ होते हैं ॥ ३६ ॥

सागरावृतधरात्रिविष्टपत्राणशासनकलापरायणः ।
अद्य रङ्गधनिकस्स मामकात् कङ्कणं कथमपाहरत् करात् ॥ ३७ ॥

समुद्रों से घिरी हुई भूमि तथा स्वर्ग की रक्षा के शासन में लगे हुए धनी रङ्गनाथ इस समय मेरे हाथ से कङ्कण को क्यों ले गये? ॥ ३७ ॥

वामनत्वमधिगम्य रङ्गराट् कङ्कणं बलिकराद्यदग्रहीत् ।
अप्रभूतमिति तद्विचिन्तयन्याचतेऽद्य मम पाणिकङ्कणम् ॥ ३८ ॥

जो श्रीरङ्गभगवान् ने वामनावतार लेकर बलि के हाथ से कङ्कण (जलबिंदु) लिया था उसे अपर्याप्त समझ कर इस समय वह मेरे हाथ का कङ्कण मांगते हैं ॥ ३८ ॥

राघवो जनकनन्दिनीकृते बद्धसिन्धुरमिहत्य राक्षसान् ।
तामलब्ध पुनरीदृशः कथं नास्मरन्मम स रङ्गनायकः ॥ ३९ ॥

जव वह रङ्गनाथ रामचन्द्र बने थे उस समय सीता के लिये समुद्र बांध कर राक्षसों को मार कर उसे प्राप्त किया था। फिर वे ऐसे होकर मेरा क्यों स्मरण नहीं करते? ॥ ३९ ॥

**मज्जतीं प्रलयसागरे भुवं यस्समेत्य च निकृष्टदंष्ट्रिताम् ।**
**रक्षतिस्म समुदञ्चच सोऽद्य मां शोकसागरगतां न मन्यते ॥ ४० ॥**

जिस ने प्रलय के समुद्र में डूवती हुई भूमि को वाराहरूप धर कर दातों से उठा कर वचाया था जो वराह सवमें निकृष्ट गिना जाता है, क्या वह इस समय शोकसमुद्रमें डूवी हुई मुझे नही जानते। (मैं वही हूं जो समुद्रमें डूवती हुई वचायी गयी थो) ॥ ४० ॥

**उद्विपक्षशिशुपालसन्निधौ रुक्मिणीमपहरन्पुरा बलात् ।**
**कामिनीषु सघृणोऽपि मां कथं रङ्गभूपतिरसावुपेक्षते ॥ ४१ ॥**

जिसने पहले वडे सवल वैरी शिशुपाल के सामने वलपूर्वक रुक्मिणी का हरण किया था, जो स्त्रियों के विषय में स्वभाव से ही दयालु हैं वे रङ्गनाथ इस समय मेरी उपेक्षा क्यों कर रहे हैं? ॥ ४१ ॥

**दन्तिगौतमवधूविभीषणद्रौपदीप्रभृतिदीनरक्षिणः ।**
**रङ्गनेतुरमलं यशो मया दीनयाऽद्य मलिनीकरिष्यते ॥ ४२ ॥**

ऐसा मालूम होता है कि गजेन्द्र, अहल्या, विभीषण, द्रौपदी आदि दीनों की रक्षा करनेवाले रङ्गनाथ के निर्मल यश को मैं दीना इस समय मलिन करूंगी। यानी जव वह मुझे न वचायेंगे तो उनके दीन बन्धुपने में वट्टा आयेगा ॥ ४२ ॥

**यत्त्वदीयविरहे न जीवितुं शक्नुयां कथमपीत्युदीर्य च ।**
**नास्मरन्मम चिरं स रङ्गराट् तद्द्विजिह्वशयनीयसंस्तरात् ॥**

मैं तेरे वियोग में किसी तरह न जी सकूंगा, ऐसा कहनेवाले आज हमारा स्मरण भी नहीं करते हैं। मैं समझती हूं कि उनका ऐसा कह

कर फिर वदल जाना दो जीभवाले सांपकी शय्या पर सोने के कारण हुआ ॥ ४३ ॥

इत्युदीर्य वचसां निबन्धनं देव सा त्वदनुरागसूचकम् ।
रङ्गराज भवदंघ्रिलिप्सया कण्ठवर्ति न जहाति जीवितम् ॥ ४४ ॥

हे देव ! आप के विषय में प्रेम वतानेवाले ऐसे वचन कह कर कण्ठ तक आये हुए प्राणों को आपके चरण पाने की लालसा से वह नहीं छोडती ॥ ४४ ॥

तन्निशम्य वचनं तयोदितं तद्दशाप्रणयभङ्गिसूचकम् ।
खेदमोदविवशीकृताशयः प्रत्युवाच भगवाननुग्रहाम् ॥ ४५ ॥

गोदा की दशा और उनके प्रेम की तरङ्गों को वतानेवाले अनुग्रहा के वचन सुन कर श्रीरङ्गनाथ भगवान् प्रेम कहानी से आनन्द तथा कष्ट से विवश हृदय हो कर अनुग्रहा से कहने लगे कि ॥ ४५ ॥

पञ्चभिः प्रसवसायकैस्स्मरा मां त्वदालिहृदये न केवलम् ।
अत्र च प्रहरतीति यत्ततस्त्वत्सखीद्विगुणितैव मे व्यथा ॥ ४६ ॥

हे अनुग्रहे! कामदेव मुझे दो स्थानों में अपने पांचों पुष्पवाणों से प्रहार करता है, एक तो तुम्हारी सखी के हृदय में बैठे हुए और दूसरे यहां, इससे तेरी सखी से मुझपर दूना प्रहार हो रहा है, किन्तु तुम्हारी सखी पर केवल एक जगह ॥ ४६ ॥

त्वत्सखीं मनसि भावयन्नहं भृङ्गकीटविधिना तदाकृतिः ।
आसमद्य न हि चेदसून्कथं धारयेयमबलां विनाऽपि ताम् ॥ ४७ ॥

जैसे कीडा, भौंरा की भावना करता हुआ भौंरा बन जाता है इसी तरह तेरी सखी की भावना करता हुआ मैं वही वन गया हूं। यदि ऐसा न होता तो मैं विना तेरी सखी के जीवित कैसे रहता ॥ ४७ ॥

काऽपि गोपवनिता विचिन्त्य मां प्रागसून्व्यसृजदद्य तत्फलम् ।
त्वत्सखीं मनसि भावयन्नहो तादृशीमनुभवाम्यहं दशाम् ॥ ४८ ॥

पहले किसी गोपी ने मेरी भावना कर के अपने प्राण छोड दिये थे। आज उसका फल मुझे मिल रहा है। मनमें तेरी सखी की भावना कर के मैं वैसी ही दशाका अनुभव कर रहा हूं ॥ ४८ ॥

**पश्य बालहरिणाक्षि यत्पुरा मामकं प्रकृतिमेचकं वपुः ।**
**तद्वियोगसमये विपाण्डरं याति चन्द्रकितपुष्करद्युतिम् ॥ ४९ ॥**

ए हिरण के वच्चे के से नेत्रोंवाली अनुग्रहे! देख जो मेरा शरीर सदा से नील रहा करता था, अव उसके वियोग में वैसा सफेद हो गया है, जैसा कि नील आकाश चांद की चांदनी में सफेद हो जाया करता है ॥ ४९ ॥

**तादृशोऽपि मम पञ्चहेतयस्तन्वि पञ्चविशिखीं मनोभुवः ।**
**नो विजेतुमशकन्यदस्य तत्तत्कटाक्षपरमाणुवैभवः ॥ ५० ॥**

जगत्प्रसिद्ध हमारे पांचों आयुध भी काम के पांचों वाणों को जीतने में समर्थ नहीं हुए ; इसका कारण और कुछ नहीं, केवल गोदा के कटाक्ष परमाणु का वैभव ही है ॥ ५० ॥

**चन्द्रिकादिचकितं मनस्तनोर्मामकीनममुमुक्षदप्यसून् ।**
**नाजिहासदयितां कदाऽपि यज्जीवितादपि च सा गरीयसी ॥ ५१ ॥**

चांदनी आदि काम के उद्दीपक पदार्थों से चकित हुआ मेरा मन प्राणों को छोडता हुआ भी उस प्यारी को कभी छोडना नहीं चाहता। क्यों कि वह मुझे प्राणों से भी अधिक प्यारी है ॥ ५१ ॥

**दक्षिणानिलमनन्यजानलप्रौढिहेतुमपि मामकं वपुः ।**
**आलिलिङ्क्षिषति तत्कचस्फुरन्मालिकाभरसुगन्धभागिति ॥ ५२ ॥**

उसके काले-काले घुंघरालेवालों की खिली हुई चमेली की माला की सुगन्धि से सना हुआ मलयानिल है। इस कारण यह मेरा शरीर उस कामाग्नि को दधकानेवाली मलयगिरि की हवा का आलिङ्गन करने की इच्छा करता है ॥ ५२ ॥

**तन्वि तत्कचभरोज्झिता स्फुरत्केसरा स्त्रगियमातनोति मे ।**
**उल्लसत्पुलकजालतद्भुजावल्लरीमृदुनिवेशविभ्रमम् ॥ ५३ ॥**

ए अनुग्रहे! यह माला जिसमें कि केसर चमक रही है, जिसे कि उसने अपने बालों से जुदा करके मेरे लिये भेजा है, यह ऐसी मुझे मालूम पडती है कि पुलकावली से सुशोभित उसकी भुजवल्ली मेरे कण्ठ में पडीं हुई है; इस माला से मुझे उसकी गलवाही का आनन्द मिल रहा है ॥ ५३ ॥

**कौमुदी नयनयो रसायनं चेतसो नवसुधा च वर्ष्मणः ।**
**कारणं किमपि जीवितस्य मे मौलिदाम तदुपायनीकृतम् ॥ ५४ ॥**

जो उसने मुझे यह शिर के बालों की माला भेजी है, यही मेरी आखों की चांदनी है, चित्त के लिये रसायन है, तथा शरीर के लिये नया अमृत है और तो क्या इस माला ने ही इस समय मेरा जीवन बचाया है। नहीं तो कोई जीने का सहारा ही नहीं था ॥ ५४ ॥

**लिप्सवश्श्रुतिसुधाभिवर्षिणीं गेयभंगिमचिरात्परांकुशात् ।**
**मूर्तयोऽधिकुरुकापुरं समायान्तु साष्टशतधामधूर्वहाः ॥ ५५ ॥**

श्री परांकुश से कानों में अमृत सींचनेवाली गीतियों को प्राप्त करने की इच्छा से हमारे १०८ अर्चावतार कुरुकापुरी आयेंगे ॥ ५५ ॥

**चारुभाषिणि सरःपुरस्सरा तत्र भक्तपरिषद्गमिष्यति ।**
**गोदया तव वयस्यया समं विष्णुचित्तविबुधोऽपि यास्यति ॥ ५६ ॥**

ए मधुरभाषिणी अनुग्रहे! सरोयोगी आदि से लेकर सब भक्त मण्डली वहां जायगी, मेरी सखी गोदा के साथ विद्वान् विष्णुचित्त भी वहां ही आ जायेंगे ॥ ५६ ॥

**मद्दशां तव सखीदशामपि प्रेक्ष्य तत्र परमार्थवेदिनी ।**
**आवयोस्सपदि संयुयुक्षया मन्त्रयेत्किमपि भक्तमण्डली ॥ ५७ ॥**

परमार्थ जाननेवाले भक्तों की मण्डली, मेरी और तेरी सखी की दशा देख कर हम दोनों को शीघ्र मिलाने के लिये कुछ विचार करेगी ॥ ५७ ॥

भट्टनाथशठकोपपद्मभूमुख्यतद्गुरुसमूहशासनात् ।
प्रस्तुतेऽधिकुरुकं स्वयंवरे तत्करग्रहमहो भविष्यति ॥ ५८ ॥

भट्टनाथ शठकोप सरोयोगी आदि प्रधान भक्त तथा गोदा के गुरुओं के अनुशासन से कुरुकापुरी में स्वयंवर होगा, पीछे मेरे साथ गोदा के पाणिग्रहण का उत्सव सम्पन्न होगा ॥ ५८ ॥

इत्युदीर्य भगवाननुग्रहां तन्मुदे मृगमदाभिमोदिनीम् ।
हल्लकस्रजमनुत्तमामदादंगुलीयमपि नाममुद्रितम् ॥ ५९ ॥

भगवान् ने अनुग्रहा से ऐसे कह कर गोदा की प्रसन्नता के लिए कस्तूरी से सनी हुई त्रिकाल खिलनेवाले लाल कमलों की अलौकिक माला अनुग्रहा को दी कि इसे अपनी सखी को दे देना तथा एक ऐसी अंगूठी भी दी जिस पर भगवान् का नाम खुदा हुआ था ॥ ५९ ॥

रङ्गाधिपस्य वचनं परिगृह्य साकं
मुद्रांगुलीयनवहल्लकमालिकाभ्याम् ।
गत्वाऽम्बुदालिरिव गां शुचिकालतप्ता-
मालिं समाश्वसितुमारभत स्मरार्ताम् ॥ ६० ॥

जो भी कुछ श्रीरङ्गनाथ ने कहा था उसी क्रम से उसे अपने हृदय में रख लिया तथा गोदा के लिए जो सुन्दर अंगूठी और त्रिकाल खिलने वाले लाल कमल की माला दी थी उसे भी ले लिया। भगवान् को प्रणाम कर के गोदा के पास चल दी। जिस तरह मेघमालाएं ज्येष्ठमास की तपी हर्दन भूमि को बरसात के दिनों में शीतल करती हैं उसी तरह वियोग से संतप्त गोदा को अनुग्रहा शीतल करने लगी ॥ ६० ॥

अथ सपदि गृहीत्वाऽनुग्रहायास्सकाशात्
सह सकलमुदन्तं लक्ष्मणा रङ्गनेतुः ।
समयमपि तदीयं वीक्षमाणाऽऽस्त गोदा
दिवसपरिबृढस्य प्रोद्गमं पद्मिनीव ॥ ६१ ॥

गोदा ने अनुग्रहा के पास से नाम की अंगूठी और माला के साथ सब समाचार जान कर उस समय की प्रतीक्षा करती रही जैसे कमलिनी सूर्य के उदय की प्रतीक्षा करती रहती है ॥ ६१ ॥

एकादशस्सर्गः समाप्तः ।

---

# द्वादशस्सर्गः

श्रीविष्णुचित्तविबुधो दुहितुस्समीक्ष्य
पञ्चायुधाभ्युदयपल्लवितं वयश्च ।
भावञ्च कन्दलितरागभरं मुकुन्दे
तस्मै पुनर्भगवते तनयामदित्सत् ॥ १ ॥

विद्वान विष्णुचित्त ने देखा कि बेटी सयानी हो गयी इसकी अवस्था में सब ओर से काम खिल रहा है, एवं भगवान् श्रीरङ्गनाथ में ही इसका पूर्ण अनुराग है। इस कारण इसे भगवान् रङ्गनाथ को ही देनी चाहिये ॥ १ ॥

स ज्यायसा शठजिताऽनुमतस्तदग्रे
गोदाकरग्रहमहोत्सवमातितंसुः ।
पाण्ड्येश्वरेण सह वल्लभदेवनाम्ना
शिष्येण च स्वसुतया कुरुकां प्रतस्थे ॥ २ ॥

इन्होंने अपने से बडे शठजित् की सलाह से उन के सामने ही गोदा के पाणिग्रहण का उत्सव करना चाहा। अपने शिष्य पांड्यदेश के राजा वीर वल्लभदेव को तथा गोदा को साथ लेकर कुरुकापुरी चल दिये ॥ २ ॥

तत्राग्रजस्य वकुलाभरणस्य सोऽङ्घ्रौ
साकं नृपेण सुतया च मुदा व्यनंसीत् ।
अन्वग्रहीत्तदनु तां नयनाञ्चलेन
सोऽपि प्रभूतकरुणावरुणालयेन ॥ ३ ॥

वहां अपने से बडे शठकोपसूरि के चरणों में गोदा और अपने शिष्य राजा के साथ आनन्द से प्रणाम किया। इसके पीछे शठकोप स्वामि ने भी बडे भारी करुणा के समुद्र नेत्रों के अंचल से गोदा पर अनुग्रह किया ॥ ३ ॥

तत्र प्रभूतवकुलाभरणप्रणीत-
कर्णामृतद्रविडसूक्तिनिबन्धलिप्सून् ।
अर्चाकृतीनुपगतानपनिद्रचिञ्चा-
शाखान्तरालनिलयान् स हरीनपश्यत् ॥ ४ ॥

वहां विष्णुचित्त ने देखा कि शठकोप स्वामीं के वनाये हुए द्राविड-भाषा के परमरोचक स्वविषयक निवन्ध को प्राप्त करने की इच्छा से जिन्हें कभी नींद नहों आतो ऐसे इमली के वृक्ष की शाखाओं पर बैठे हुए अर्चाकृति १०८ भगवानों को देखा ॥ ४ ॥

अर्चाकृतीनभिविवन्दिषया मुकुन्दान्
तत्रागतान् महितरङ्गधुरीणमुख्यान् ।
आयान्तमैक्षत स विष्णुपदे सुराणां
बृन्दं विरिञ्चपुरुहूतपुरस्सराणाम् ॥ ५ ॥

आये हुए उन रङ्गनाथ आदिक अर्चाकृति भगवानों के चरणों की वन्दना करने की इच्छा से, आकाश में आते हुए ब्रह्मा और इन्द्र से लेकर सव देवों के समुदाय को देखा ॥ ५ ॥

कासारभूतमहदाह्वयभक्तिसार-
भक्तांघ्रिरेणुकुलशेखरयोगिवाहान् ।
आसाद्य तत्र कविना मधुरेण युक्तान्
अन्योन्यवन्दनमहोत्सवमन्वभूत्सः ॥ ६ ॥

वहां विष्णुचित्त को सरोयोगी भूतयोगी, महदाह्वय योगी, भक्तिसार, भक्तांघ्रिरेणु, कुलशेखर मुनिवाहन और मधुरकवि मिले। वहां उन्होंने आपस की वन्दना का अनुभव किया ॥ ६ ॥

भक्तास्सरःप्रभृतयोऽपि परांकुशस्य
पादारविन्दयुगले प्रणिपत्य भक्त्या ।
अश्रौषुरस्य चतुरांश्चतुरप्रबन्धान्
अश्रावयन् पुनरमुं च निजप्रबन्धान् ॥ ७ ॥

सरोयोगी से लेकर जितने भी भक्त वहां आये हुए थे, उन्होंने भक्ति के साथ शठकोपस्वामी के चरणों में प्रणाम किया। पीछे सबने शठकोप के बनाये हुए चारों सुन्दर प्रबन्धों को सुना और अपने बनाये हुए प्रबन्धों को शठकोप स्वामि के लिये सुनाया ॥ ७ ॥

साकं सरःप्रमुखभक्तगणैश्शठारिः
गोदाकृतं कृतियुगं सरसं निशम्य ।
वीक्ष्याननन्द विषमेषुसखं वयोऽस्याः
दीनां दशां च हृदयं मुरवैरिसक्तम् ॥ ८ ॥

शठकोप स्वामी ने सरोयोगी आदि भक्तजनों के साथ गोदा की बनाई हुई दोनों रचनाओं को गोदा से ही सुना। गोदा का हृदय भगवान् पर आसक्त हो चुका था। वियोग ने इसकी दीनदशा बना रखा था; युवावस्था थी जो कि स्वभाव से ही काम की सखी हुआ करती है। यह देख कर शटकोपसूरि को बडा आनन्द हुआ ॥ ८ ॥

अर्चावतारहरिमुख्यवराय दातुं
गोदां स्वयंवरविधानमहोत्सवेन ।
तत्संविधानकृतये मधुरं कवीन्द्रं
राज्ञाऽऽदिशच्छठरिपुस्सह वल्लभेन ॥ ९ ॥

स्वयंवर के महोत्सव की विधि से अर्चाकृतियों में मुख्य जो रङ्गनाथ भगवान् हैं, उन्हें देना चाहा। इसके लिए जो भी प्रबन्ध होना चाहिये वह मधुरकवि और राजा के जिम्मे कर दिया ॥ ९ ॥

आज्ञापितौ शठजिता मणिमण्डपं तौ
प्रालम्बचामरविचित्रवितानरम्यम् ।
सौवर्णसाष्टशतमञ्चमहःप्ररोह
नीराजिताखिलदिगन्तममू व्यधाताम् ॥ १० ॥

मधुरकवि और राजा वल्लभदेव को शठकोपस्वामी ने आज्ञा दी कि एक सुन्दर मणियों का मण्डप कर दो। इसी आज्ञा के अनुसार

मण्डप तैयार किया गया। इस में लटकते चामर लगाये गये थे तथा अद्भुत वितान बनाया गया था, जिससे यह परमशोभायमान मालूम होता था। एक सौ आठ सोने के मंच बनाये गये जिन के किरणों की वृद्धि ऐसी मालूम होती थो मानों सम्पूर्ण दिशाओं की आरती हो रही है ॥ १० ॥

यत्रोत्सवोचितसमस्तपदार्थजातं
सम्पाद्य तौ सकलभूतलधामदेवैः ।
साकं समस्तनृपतीन् हरिभक्तबृन्दैः
पारांकुशं पुरमनीनयतामृषींश्च ॥ ११ ॥

उत्सव के लिये जिन वस्तुओं की आवश्यकता हुआ करती है वे सब वस्तु इकट्ठी कर दी गयी। भक्त भूदेव तथा भक्त राजा बुलाये गये एवं इसी कुरुकापुरी में सब ऋषि लोग इकट्ठे किये गये ॥ ११ ॥

भुव्यानकेन सुरदुन्दुभयः प्रणेदुः
वाराङ्गनाभिरमरीपरिषन्ननर्त ।
गानैस्समं नभसि किन्नरगीतिरीतिः
प्रीतिस्समाजनि नृणां च तदा सुराणाम् ॥ १२ ॥

जमीन में नगडे तथा स्वर्ग में सुर दुन्दुभि बजने लग गयी। वारांगनाओं के साथ देवियों की सभा ने भी नाचना आरम्भ कर दिया। भूमण्डल के गायकों के साथ आकाश में किन्नर गाने लगे इस प्रकार देवता और भूलोकवासी दोनों को एकसी प्रसन्नता उत्पन्न हुई ॥ १२ ॥

अर्चाकृतीन् मधुरिपूनथ रङ्गमुख्यान्
मञ्चेषु तौ मणिमरीचिनिचोलितेषु ।
भक्त्या निवेश्य परया सकलां सपर्यां
तेषामथोचितमुदारमुभावकार्ष्टाम् ॥ १३ ॥

भगवान् रङ्गनाथ से लेकर जितने भी अर्चाकृति भगवान् थे वे सब वहीं उपस्थित थे। सब को मंचों पर बिठाया जो कि मणियों की

किरणों से देदीप्यमान तथा ऊंचे थे। पीछे परमभक्ति के साथ सब की पूजा की जैसी जिसकी होनी चाहिये थी ॥ १३ ॥

श्रीविष्णुचित्ततनयाऽलमकारि ताभ्यां
वैवाहिकैर्मणिमहाभरणप्रकाण्डैः ।
वासन्तिकेव किरणैर्मधुमाधवाभ्यां
व्योमस्थलीव किरणैर्विधुभास्कराभ्याम् ॥ १४ ॥

मधुरकवि और वल्लभदेव ने विवाह के समय के मणियों के बडे-बडे अच्छे आभूषणों से गोदा को सजाया मानों चैत्र और वसन्त दोनों ने मिलकर अपने फूलों से वासन्तिका लता को सजा दिया हो, एवं सूर्य और चांद दोनों ने अपनी किरणों से व्योमस्थली को अलंकृत किया हो ॥ १४॥

अग्रे श्रिताः पितृगणैश्शठकोपमुख्यैः
पश्चाद्वृता च विमलामुखमातृवर्गैः ।
सानुग्रहाभिरखिलालिभिरात्तपार्श्वा
गोदा स्वयंवरणमण्डपमाससाद ॥ १५ ॥

आगे आगे श्रीशठकोप स्वामि से लेकर पितृगण चलते थे पीछे पीछे चामरग्राहिणी चलती थी। अगल बगल अनुग्रहा आदिक सखियां चलिती थीं। इस प्रकार गोदा स्वयंवर के मण्डप में पहुंची॥ १५ ॥

मञ्चान्तरालनिलयं मधुवैरिबृन्दं
गोदासखश्शठरिपुः प्रणिपत्य भक्तैः ।
तत्रावलम्ब्य करपल्लवमात्मजायाः
तस्यै न्यवेदयदमूनवलोकयेति ॥ १६ ॥

गोदा समेत शठकोप स्वामी ने मंचों पर बैठे हुए भगवानों और भक्तों को प्रणाम किया पीछे गोदा का हाथ पकड करके कहने लगे कि इनको देखो ॥ १६ ॥

वत्से स्वयंवरविधेस्तव वत्सलत्वा-
द्वैकुण्ठदिव्यनगरादपि दुग्धसिन्धोः ।
सान्तःपुरौ ससुरसूरिमुनीश्वरौ तौ
प्रत्यक्षिताविह पुरः पुरुषौ पुराणौ ॥ १७ ॥

ऐ वत्सिके! तेरे स्वयंवर विधान के वात्सल्य से प्रेरित हो कर अपने-अपने अन्त.पुर को तथा सुर सूरि और मुनीश्वरों को साथ ले क्षीरसमुद्र वासी भगवान् क्षीरसागर से तथा वैकुण्ठ की अपराजिता पुरी में रहनेवाले भगवान् वहां से यहां आकर तेरे सामने प्रत्यक्ष हो रहे हैं ॥ १७ ॥

चोलागतान् दशगुणांश्चतुरश्च पाण्ड्या-
दष्टादशापि दश केरलतस्त्रिभिश्च ।
मध्यादुभौ द्व्यधिकविंशदवेहि विष्णून्
तोण्डीरतश्च दश सैकमिहोत्तरात्त्वम् ॥ १८ ॥

हे गोदे ! चोलदेश से ४० भगवान् तथा पाण्ड्यदेश से १८ एवं केरल प्रान्त से १३ तथा मध्यसे २ तोण्डीर से २२ और उत्तर से ११ आये हैं। तू इन्हें देख ॥ १८ ॥

एकं वृणीष्व वरमेष्विति तान्निगद्य
पूर्वं समीरितसमस्तगुणापदानान् ।
अस्यै प्रदर्शय यथाक्रममम्बुजाक्षा-
नित्यादिदेश स शठारिरनुग्रहां ताम् ॥ १९ ॥

इनमें से एक को वर ले ऐसा गोदा से कह कर अनुग्रहा से बोले कि इन सब को सिलसिलेवार दिखाओ और हर एकके गुण तथा महत्त्वपूर्वक इनके चरित्र भी गोदा को सुना दो। फिर गोदा जिसे चाहेगी उसे वर लेगी ॥ १९ ॥

श्रीवत्सकौस्तुभमनोज्ञभुजान्तराल
बाहाचतुष्टयवतो धृतशङ्खचक्रान् ।
श्यामान्निशाम्य समरूपजुषो मुरारी
न्नाबोधि केशवमभीष्टतमं मृगाक्षी ॥ २० ॥

शिखावतो लाजविमोक्षकाले धूमावलिः प्राज्यहविस्सुगन्धिः ।
मुहूर्तमापद्यत कातराक्ष्याः मुखारविन्दे भ्रमरालिशोभाम् ।। ३३ ।।

गोदा अग्नि में खीलों को छोडने के लिये जिस समय झुकी हुई थी, उस समय अग्नि से प्रभूत हवि की सुगन्धियुत धूम छटा उठ रही थी, जिसकी तरफ झुकते ही गोदा की आखें कतराने लगी, एवं वह धूम छटा थोडी देरके लिये गोदा के मुखकमल पर भोंरे की शोभा पाने लगी ।। ३३ ।।

स चोदितश्शङ्करवासवाभ्यामश्मानमारोपयतिस्म तस्याः ।
दोर्भिश्चतुर्भिश्चरणं चिकीर्षुः प्रायःस्वहृत्कौस्तुभसङ्गयोग्यम् ।। ३४ ।।

शिव और इन्द्र के कहने पर श्रीरङ्गनाथ गोदा के चरण को चारों हाथों से उठाकरके सिला पर चढाया, इस लिये कि इस चरण को अपने वक्षस्थल में रहते हुए कौस्तुभमणि के सङ्ग के योग्य बनाना था ।।३४।।

इत्थं स गोदां परिणीय रङ्गी स्तुतो हरब्रह्ममुखैरमर्त्यैः ।
यथा विरेजे न तथा पयोधेः अवाप्य लक्ष्मीं मरुतां समक्षम् ।। ३५ ।।

इस प्रकार रङ्गनाथ भगवान् ने गोदा के साथ परिणय कर लिया। ब्रह्मा और महादेव आदि जितने भी देवता हैं, सबने खूब स्तुतियां की। उस समय उस मण्डली में जिस शोभा को श्रीरङ्गनाथ भगवान् प्राप्त हुए, वह शोभा उन्हें क्षीरसमुद्र से महालक्ष्मी को प्राप्त करने में भी नहीं मिली थी ।। ३५ ।।

सत्कर्तुमीशाजमुखांश्छठारिः श्रीरङ्गिसेनापतिमादिदेश ।
गोविन्दसंघान् मधुरं कविं च महीपतिं वल्लभदेवपाण्ड्यम् ।। ३६ ।।

शठजित् ने श्रीरङ्गनाथ के सेनापति विष्वक्सेन को आज्ञा दी कि शिव ब्रह्मा आदि जो देव आये हुए हैं, इनका सत्कार करो, एवं मधुरकवि और पाण्ड्य के अधिपति वल्लभदेव महाराज को आज्ञा दी कि ये जो १०८ गोविन्द भगवान् आये हुए हैं, इनका सत्कार करो ।। ३६ ।।

तन्मङ्गलाशासनतत्परेभ्यः सरश्शठारातिपुरस्सरेभ्यः ।
गोदागुरुभ्यो दिशतिस्म मुक्तिं शुल्कं तदा रङ्गपतिः प्रहृष्टः ॥ ३७ ॥

उस समय सरोयोगी शठकोप स्वामी प्रभृति जितने भक्तवर्य आये थे, सबके सब मङ्गलाशासन करने में लगे हुए थे। उस समय श्रीरङ्गनाथ भगवान् ने प्रसन्न हो कर मंगलाशासन में तत्पर सरोयोगी शठकोप प्रभृति गोदा के पितृवर्ग को गोदा के कन्याशुल्क के वदले में मुक्ति दी ॥३७॥

वितीर्य तन्मातृजनाय रङ्गी साकं तदालीपरिचारिकाभिः ।
गोदासखस्तत्र वरानभीष्टान् गान्धर्वपर्यङ्कगतोऽशयिष्ट ॥ ३८ ॥

श्रीरङ्गनाथ भगवान् ने अभीष्टवस्तुओं को गोदा के मातृवर्ग सखियों तथा परिचारिकाओं को अभीष्टवर देकर वहां ही रात होने के कारण गोदासमेत गान्धर्वपर्यङ्क पर शयन किया ॥ ३८ ॥

श्रुत्यन्तवन्दी शठकोपमुख्यप्रपन्नलोकः क्षणदावसाने ।
जगत्त्रयीरक्षणजागरूकं प्राबोधयद्रङ्गपतिं स्तवेन ॥ ३९ ॥

वेदान्तों के द्वारा स्तुतिपाठ करनेवाले शठकोप आदिक प्रपन्न जनों ने प्रातःकल के सगय स्तवों द्वारा श्री रङ्गनाथ भगवान् को जगाना प्रारम्भ किया, जो श्री रङ्गनाथ भगवान् तीनों लोकों की रक्षा में सदा सजग रहनेवाले हैं ॥ ३९ ॥

एष स्वपादाहतिविह्वलेष्टसरोजिनीशोकविमर्शरुष्टात् ।
उदेष्यतस्त्रस्त इवोष्णरश्मेः स्रस्तांशुकोऽस्ताचलमेति चन्द्रः ॥ ४० ॥

यह चांद चांद के किरणों के प्रहार से व्याकुल हुई प्यारी कमलिनी के शोक के विचार से रुष्ट उदय होनेवाले सूर्य से डरे हुए की नाईं, किरणों को गिरा कर अस्ताचल को जा रहा है। जैसे कोई डरपोक डर के मारे ढीली धोती को किडिढाये हुए कहीं छिपने की प्रयत्न कर रहा है। यह चन्द्रमा मानों उदय होते हुए सूर्यं से डर कर अपने गिरे हुए अंशु का (वस्त्रका) भी ध्यान न करके अस्ताचल को भागा जा

रहा है, क्यों कि इसने [चन्द्रमाने] अपने किरणरूप चरणों के आघात से सूर्य की प्यारी कमलिनी को विह्वल कर दिया था ।। ४० ।।

**त्यक्ताम्बरस्स्पष्टतमात्मचिह्नः निमीलिताघूर्णिततारकाभः ।**
**कामीव विस्रस्तकरो विभाति सोमोऽपराशासुदृशोपभुक्तः ।। ४१ ।।**

रात भर किसी दूसरी सुनयनी का भोगा हुआ, सब कुछ दीखता हुआ नङ्गा तथा मिची हुई आखों के घूमते हुए तामेंवाला एवं ढीले हाथों वाला कामी जैसा दीखता है, वैसा ही दिशारूपी सुनयनी का भोगा हुआ चांद दीख रहा है। आकाश को छोड चुका है, कलङ्क परिस्फुट दीख रहा है, उसके चारों ओर धूमनेवाले तारों की आभा मिचसी गयी है, किरणें ढीली हो गयी हैं। अम्बर चिह्न तारक और कर ये द्व्यर्थक हैं। पश्चिम दिशारूपी कामिनीका उपभोग करने के कारण चन्द्रमा की दशा परस्त्रीगमन करनेवाले कामी पुरुष के समान हो रही है, अर्थात् वह त्यक्तवसन, स्पष्टसंभोगचिह्न, निमीलितनयन, घूर्णिततारक और विस्रस्तकर हो रहा है । यहां अम्बर, चिह्न, तारक और कर ये द्व्यर्थक शब्द हैं ।। ४१ ।।

**दृष्ट्वाऽपराशादयितानुरक्तं कुमुद्वती सत्पतिमीर्ष्ययेव ।**
**धत्ते मुखं संकुचितं सहेत का वाऽन्यनारीविहृतिं प्रियस्य ।। ४२ ।।**

कुमुद्वती अपने सुयोग्य पति को पश्चिमदिशारूपी प्यारी से अनुरक्त देख कर इर्ष्या के मारे अपने मुंह को सिकोडे हुए बैठी है, क्यों कि ऐसी कौनसी स्त्री होगी जो अपने पति के परस्त्रीविहार को सहन किये बैठी रहेगी ।। ४२ ।।

**अग्रेसरस्तस्य सहस्रभानोरनूरुरेवाच्छिनदन्धकारम् ।**
**प्रायेण तेजस्विपुरस्सराणां स्थातुं पुरः कः प्रभवेदरातिः ।। ४३ ।।**

सूर्य तो दूर रहा, उस के आगे चलनेवाले अरुणने ही अन्धकार नष्ट कर दिया। अधिकांश यह वात सत्य है कि तेजस्वी जनों के आगे आगे चलनेवालों के सामने कोई वैरी टिक नही सकता ।। ४३ ।।

**विकस्वराणामुदरेऽम्बुजानां विजृम्भिता षट्पदगीतिभङ्गी ।**
**तनोति तन्मध्यविबुद्धलक्ष्मीपदस्खलन्नूपुरशिञ्जिताभाम् ॥ ४४ ॥**

खिले हुए कमलों के बीच में भौंरों के तरह तरह के गुञ्जार की ध्वनि आने लगी है, यह ऐसी मालूम होती है कि जगी हुई कमलासना के पैरों के नूपुरों की ध्वनि हो रही हो ॥ ४४ ॥

**एकस्स्वपत्कैरवसंपुटान्तः परिभ्रमन्तीं भ्रमरीं निरीक्ष्य ।**
**कृतारवो मोचयते द्विरेफश्चलत्पतत्राञ्चलघट्टनाभिः ॥ ४५ ॥**

किसी भौंरे ने मुकुलित होते हुए सफेद कमल के सम्पुट के भीतर घूमती हुई भ्रमरी को देखा, जिस से वह भी गुञ्जार करता हुआ चलते हुए पंखों रूप अञ्चल के आघात से आवरण को हटा कर भोंरी को निकाल लेने में तत्पर हुआ ॥ ४५ ॥

**कुमुद्वतीं संकुचितां विहाय मधुव्रतः कश्चन मंजुनादः ।**
**विकस्वरं प्रेप्सति पुण्डरीकं सापायमेकोऽपि न लम्बते हि ॥ ४६ ॥**

कोई मधुर गुंजार करनेवाला भौंरा कुम्हिलाई हुई कुही को छोड कर खिले हुए इच्छित कमल पर आ गया, यह वात प्रसिद्ध है कि आपद युक्त स्थान का कोई भी अवलम्बन नही लेता ॥ ४६ ॥

**निशातरुण्याश्शशिनाऽन्वितायाा व्योमस्थलीतल्पविकीर्णमर्कः ।**
**नक्षत्रवेणीकुसुमं तमिस्रकस्तूरिकाभिस्सह मार्ष्टि पादैः ॥ ४७ ॥**

व्योमस्थली की शय्या पर निशारूपी युवती चन्द्रमा के साथ सो रही थी, और नक्षत्ररूपी शिर के वालों के फूल गिर पडे थे, अन्धकाररूपी कस्तूरी के साथ उन फूलों को अपनी किरणरूपी चरणों से सूर्य पोंछ रहा है ॥ ४७ ॥

**प्रत्यूषतो वासवदिक्तरुण्यां जाते सुजाते दिननाथबिम्बे ।**
**निमीलिताम्भोरुहकोशकारानिकेतनात् षट्चरणा विमुक्ताः ॥ ४८ ॥**

पूर्वदिशारूपो युवती में प्रातःकाल से सूर्यमण्डल का जन्म हुआ और थोडे हीं समय में भली भांति निकल आया, जिसके निकलते ही कमल खिले गये एवं संकुचित कमलों के कोशरूपी कारागृह में जो भोंरे वसे हुए थे वे, सब कमलों के खिल जाने पर उन में से छूट कर उडने लग गये ॥ ४८ ॥

**बालातपो नूतनपल्लवाभां द्रुमेषु शैलेषु च धातुशोभाम् ।**
**आम्रेडितामब्जरुचिं सरस्सु काश्मीरकान्ति कुरुतेऽङ्गनासु ॥ ४९ ॥**

प्रातःकाल के सूर्य की घाम ने वृक्षोंपर पड कर उनपर नये पल्लवों की शोभा फैला दी, पहाडोंपर धातुओं की शोभा चमका दी, सरोवरों में पडते ही कमल के फूलों की शोभा को दुगुनी कर दी, तथा स्त्रियों के शरीरपर पडते ही केसर की शोभा कर दी ॥ ४९ ॥

**बालातपालोहितपद्मपर्णपाथःकणानब्जगताण्डबुद्ध्या ।**
**हंसीं स्पृशन्तीमवलोक्य चञ्च्वा हंसो हसत्यम्बुजकोशवर्ती ॥ ५० ॥**

प्रभातकाल के सूर्य की रोशनी से भली भांति लाल हुए कमल के पत्तों पर पडी हुई पानी की बूदों को अण्ड मान कर चोंच से पकडती हुई हंसी को देख कर कमलकोश पर खडा हुआ हंस हंस रहा है ॥ ५० ॥

**भास्वानवाप प्रथमाद्रिशृङ्गं घनं तमो भिन्नमभूत्प्रभातम् ।**
**प्रफुल्लपुष्पात्स्रवते मरन्दो रङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥ ५१ ॥**

हे रङ्गेश्वर! सूर्यनारायण उदयाचल की चोटी पर पहुंच गया, घना अन्धकार जाता रहा, सवेरा हो आया, खिले हुए फूलों से मकरन्द टपक रहा है, आप नींद त्याग कर उठिये ॥ ५१ ॥

**प्रसूनगन्धी नवमल्लिकायाः पूर्वो मरुद्वाति हि नाथ पक्षौ ।**
**विधूय हंसो बुबुधेऽब्जशायी रङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥ ५२ ॥**

पूर्वी हवा नई चमेली के फूलों की सुगन्धि लिये हुए चल रही है, कमलों पर सोनेवाला हंस अपने पंखों को फरफरा कर उठ खडा हुआ है, हे रङ्गेश्वर! आप अपनी नींद को त्याग उठ वैठें ॥ ५२ ॥

**दिक्ष्वर्कदीप्तिर्विततोडुकान्तिः मग्नास्तरोचिर्हिमरुग्गतोऽस्तम् ।**
**आवाति पालीसुरभिस्समीरो रङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥ ५३ ॥**

इस समय दिशाओं में सूर्यनारायण का प्रकाश फैल रहा है, तारों की आभा नष्ट हो गयी है, चन्द्रमा भी फीका फीका अस्त हो रहा है, देखो! हवा सुपारी के गुच्छों के गन्ध को लिये हुए चल रही है, हे रङ्गेश्वर! नींद त्यागकर उठ वैठिये ॥ ५३ ॥

**उद्यानमुद्यद्द्रुतपक्षिजालं रात्रिर्गता व्युष्टमितोऽब्धिघोषः ।**
**मालाकरो देवगणोंघ्रिसेवी रङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥ ५४ ॥**

वाग में वाग के पखेरू अपनी पंखों को फरफरा कर वैठ गये हैं, रात समाप्त हो चुकी, प्रभात हो गया, रात को जो समुद्र गरज गरज कर वढ रहा था, इस समय उसका गरजना समाप्तसा हो गया है। चरण सेवक देवगण मालाओं को हाथ में लिये हुए खडे हैं, हे रङ्गेश्वर! नींद को त्याग कर उठ वैठें ॥ ५४ ॥

**गोष्ठेषु गोपाहितवेणुनादः मोक्षे महिष्या वृषहुंकृतिश्च,।**
**व्याप्तोऽलिझङ्कारवो दिशासु रङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥**

जहां गायें वांधी जाया करती हैं वहां गाओं को जंगल में ले जाकर चरानेवाले ग्वाले वंशी वजा रहे हैं, भैंस के खोलने के अवसर पर विजार हुंकार कर रहे हैं, भोरों की झंकार का शब्द दिशाओं में व्याप्त हो गया है, हे रङ्गेश्वर! नींद को त्यागकर उठिये ॥ ५५ ॥

**रथेषु सूर्या वृषभेषु रुद्राः गुहो मयूरे वसवो मरुद्भिः ।**
**सनृत्तगीतिस्तुतयोऽङ्गणे ते रङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥ ५६ ॥**

आपके आंगन में द्वादशादित्य रथ पर सवार हो, और एकादश रुद्र वैलों पर चढ कर तथा मोर पर षडानन सवारी करके नाचते गाते हुए स्तुति कर रहे हैं। मरुतों के साथ वसु भी आप के आंगन में आकर नाच गाकर आप की प्रार्थना कर रहे हैं, हे रङ्गेश्वर! नींद को छोड कर उठ बैठें ॥ ५६ ॥

**अमी सुराणां मुनयो मरुद्भिः इन्द्रो गजो द्वारि निपीड्यमानम् ।**
**गन्धर्वविद्याधरयक्षबृन्दं रङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥ ५७ ॥**

ये देवर्षि आप के दरबार में खडे हुए हैं, मरुद्गणों को साथ लिये हुए इन्द्र भी आपकी हाजिरी बजा रहा है, आपका हाथी भी आप के द्वार पर खडा हुआ है, गन्धर्व विद्याधर और यक्षों का समुदाय आप के जाग उठने की प्रतीक्षा कर रहा है, हे रङ्गेश्वर! नींद त्याग उठ बैठिये ॥ ५७ ॥

**निधिव्रजोद्यत्कपिलात्मदर्शाद्यर्घास्सुरास्तुम्बुरुनारदाद्याः ।**
**प्राप्ता मुनीन्द्राश्च रविर्दिवीन्धे रङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥**

निधियों का समूह कपिला गौ, काच आदि सामग्रियों को लेकर देवता लोग आ गये हैं, तुम्बुरु और नारद आदिक गानविद्याविशारद तथा महामुनिजन सब आ गये हैं, सूर्य आकाश में प्रदीप्त हो रहा है, हे रङ्गेश्वर! नींद को छोड कर उठ बैठिये ॥ ५८ ॥

**मृदङ्गवीणामुखवाद्यनादैः गानं पुरः कैन्नरगारुडं तत् ।**
**गन्धर्वसिद्धादिगणस्सभार्थी रङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥ ५९ ॥**

मृदङ्ग और वीणा आदि बाजों के शब्द के साथ किन्नर व गरुड सामने हो रहा है। गन्धर्व और सिद्धों का समुदाय आपकी सभा में आना चाहता है, हे रङ्गनाथ! नींद को त्यागकर उठ वैठिये ॥ ५९ ॥

**फुल्लाब्जमभ्युद्गतभानुबिम्बं स्नाताङ्गनाधूतकचार्द्रचेलम् ।**
**उषःस्फुटं सह्यसुतापरीतरङ्गेश्वरोत्तिष्ठ विहाय निद्राम् ॥ ६० ॥**

कमल खिल चुके, सूर्यमण्डल निकल आया, स्त्रियां स्नान करके अपने बालों को सुखा रही हैं, शिर धुल चुके, कपडे भीगे हुए हैं, प्रातः काल परिस्फुट प्रतीत हो रहा है, कावेरी से घिरे रहनेवाले रङ्गेश्वर! नींदको छोड कर उठ बैठिये ॥ ६० ॥

समाकृतिस्रक्तुलसीभरोद्यत्प्रसूनपेटीघटितांसभागः ।
भक्तांघ्रिरेणुर्दशगाथयेत्थमर्घं वितेने द्रमिडोक्तिमय्या ॥ ६१ ॥

सुन्दर तुलसी की मालाएं और तुलसीदल की भरी हुई बांस की खुली पेटी कन्धे पर लटकाये हुए भक्तांघ्रिरेणु भी द्रविडभाषा की अपनी दश गाथाओं से आपकी पूजा कर रहे हैं ॥ ६१ ॥

प्राबोधकं सूक्तिकदम्बमित्थं भक्तैश्शठारातिमुखैः प्रणीतम् ।
आकर्ण्य कर्णामृतमम्बुजाक्षः प्राबुद्ध रङ्गाधिपतिः प्रभाते ॥ ६२ ॥

इस प्रकार के वन्दीपाठ शठकोप आदि मुनिवर्यों ने कहे थे, जो रङ्गनाथ भगवान् को अमृत के समान मीठे मालूम होते थे, जिन्हें सुनते ही कमलनयन रङ्गनाथ भगवान् जाग पडे ॥ ६२ ॥

ततस्समुत्थाय विभातयोग्यान्निर्वर्त्य रङ्गी नियमानशेषान् ।
मुरारिबृन्दारकसूरिभूपचयान्निजांघ्रिप्रवणान् ददर्श ॥ ६३ ॥

इस के बाद उठे और प्रातःकाल के करने के सब नियमों से निवृत्त होकर अपने चरणों में चित्त लगाये हुए जो १०७ भगवान् सब देवता भक्तगण और सब राजा लोग उपस्थित थे, उनको देखा ॥ ६३ ॥

अथाधिरुह्याधिपतिं खगानां स गोदया साकमुपास्यमानः ।
मुकुन्दबृन्दारकभक्तबृन्दैः प्रतिष्ठतेस्म प्रति रङ्गधाम ॥ ६४ ॥

इसके बाद पक्षिराज गरुड पर गोदासमेत सवार हो गये । जो समीप में उपस्थित थे, वे सब विनम्रभाव से उपासना करते रहे । आपने रङ्गधाम के लिये प्रस्थान कर दिया ॥ ६४ ॥

**यियासति श्रीमति रंगराजे स्वानौपवाह्यानधिरूढवन्तः ।**
**गृहीतबालव्यजनादयस्ते सर्वेऽपि कैङ्कर्यपरा बभूवुः ।। ६५ ।।**

श्रीरङ्गनाथ भगवान् ने जब श्रीरंगक्षेत्र चलने की इच्छा की तब उनके पास जो खडे हुए थे, वे चामरादिक ले अपनी अपनी सवारियों पर चढ चले और सेवा में तत्पर हो गये ।। ६५ ।।

**धाता मरालं हरयस्सुपर्णान् हरो वृषं वज्रधरः करीन्द्रम् ।**
**देवा विमानानि नृपास्स्ववाहान् आरुह्य भक्तैश्च तमन्वगच्छन् ।।**

ब्रह्मा हंस पर चढे, १०७ भगवान् अपने अपने गरुड पर सवार हुए, शिवने अपना वैल संभाला, इन्द्र ने हाथी की सवारी ली, देवता विमानों पर लद गये, अन्य राजालोग अपनी अपनी सवारियों पर सवार हो रङ्गनाथ भगवान् के पीछे पीछे हो लिये । भक्त लोग भी इन के साथ साथ चल पडे थे ।। ६६ ।।

**पतत्रवातप्रसरावधूतपयोमुचा पत्ररथेश्वरेण ।**
**गच्छंस्तदा रंगपतिस्सहेलं मोदेन गोदामिति वाचमूचे ।। ६७ ।।**

भगवान् गरुड पर चढे हुए आकाश मार्ग से श्रीरङ्गक्षेत्र को जा रहे हैं, गरुड की पंखों के वेगसे बादल इधर उधर चलते फिरते हैं, उस समय आप प्रसन्नता में ओतप्रोत होकर हंसते हुए गोदा से ऐसा कहने लगे ।। ६७ ।।

**पश्याग्रतः पर्वतसार्वभौमं कान्ते पटीरद्रुमबृन्दसान्द्रम् ।**
**यस्मिन् मुनीन्द्रः कबलीकृताब्धिः करोति वासं कलशीकुमारः ।। ६८ ।।**

देख प्रिये! यह अपने आगे पर्वतों का राजा आ गया है। देख! इस पर चन्दन के वहुत से सघन वृक्ष लगे हुए हैं, इसी पर्वत पर कुम्भज मुनिराज वास करते हैं, जो समुद्र को एक चुल्लू कर पी गये थे ।। ६८ ।।

**तन्वि त्वमालोकय ताम्रपर्णीं पटीरमुक्तागरुचारुगात्रीम् ।**
**यां पावनीमद्रिरसावनैषीत्पत्युर्नदीनां प्रथमावरोधम् ।। ६९ ।।**

हे दुबले से शरीरवाली! इस ताम्रपर्णी नदी को तो देख! यह इस का कलेवर चन्दन मुक्ता और अगरु से कैसा शोभायमान हो रहा है, जिसे उस पर्वत ने नदीपति महासागर को पहली पत्नी के रूप में पहुंचायी ॥ ६९ ॥

**वेगेन गोदे! विनतासुतस्य तीर्त्वा क्षणाद्वेगवतीप्रदेशात् ।**
**आमोदमेदस्विसुजातवातमारामभूमीधरमागतौ स्वः ॥ ७० ॥**

हे गोदे! गरुड के वेग से बहुत थोडी देर में वेगवती के प्रदेश को पार करके उस बाग के पर्वत पर आ गये हैं, जिसके संपर्क से हवा सुगन्धि सारवाली बन जाती है ॥ ७० ॥

**आलोकयारामगिरिं पुरस्तात्क्रीडागिरिं सुन्दरि मामकीनम् ।**
**यत्प्रान्तसीमा हरति प्रजानां जनिश्रमं मन्मृगयाश्रमञ्च ॥ ७१ ॥**

हे सुन्दरि! सामने बाग के पर्वत को देख। यह मेरा क्रीडा पर्वत है, जिसके प्रान्त की सीमा मनुष्यादिकों के जन्म के परिश्रम को तथा मेरे मृगयाश्रम को हर लिया करतीं है ॥ ७१ ॥

**मञ्जीरसिन्धूर्मिविहारशीतमाधूतनानासुमनस्सुगन्धिम् ।**
**आरामशैलः कुरुते पुरस्तादुपायनं मन्धरगन्धवाहम् ॥ ७२ ॥**

यह मेरा क्रीडापर्वत मंजीरा नदी की लहरों के विहार से ठण्डी एवं गिरे हुए अनेक तरह के फूलों की सुगन्धि को लिये हुए जो मन्दी मन्दी हवा चल रही है, उसे सामने से हमारा भेंट कर रहा है ॥ ७२ ॥

**शाखाग्रनिर्भिण्णशशाङ्कबिम्बक्षरत्सुधापूरभृतालवाला ।**
**अत्रावली स्वादु वनस्पतीनां फलं ददातीति किमत्र चित्रम् ॥ ७३ ॥**

इस बाग के ऊंचे पेडों की शाखाओं से चांद का मण्डल छिद जाता जिस से अमृत चू चू कर शाखाओं के द्वारा आलबालों में आकर इकट्ठा हो जाता है, ऐसे ऐसे पेडों तथा वनस्पतियों का समुदाय जो मीठे फल दे, इसमें आश्चर्य ही क्या है ॥ ७३ ॥

अस्मिन्ननालम्बनभोविहारमातन्वतामर्कतुरंगमाणाम् ।
मञ्जीरसिन्धुर्मरुदंकुरोत्थैः अम्भःकणैश्श्रान्तिमपाकरोति ॥ ७४ ॥

विना किसी आलम्वन के सूर्य के घोडे आकाश में चलते चलते जव इसके ऊपर आ जाते हैं, तो मंजीरसिन्धु हवा के झोखे से उडाये गये पानी के कणों से, उन घोडों के परिश्रम को दूर कर देते हैं ॥ ७४ ॥

अत्रेयमाभाति हरिन्मणीनामभीशुपाली परिजृम्भमाणा ।
पतंगरश्मिप्रकटाभियोगात् त्रस्ता तमिस्रा शरणागतेव ॥ ७५ ॥

यहां यह चारों ओर फैलती हुई हरितमणियों की पांतियां ऐसी मालूम होती हैं कि सूर्यनारायण की किरणों के आक्रमण से डरी हुई रात यहां शरणागत हो कर आयी है ॥ ७५ ॥

झरेण पार्श्वद्वयनिस्सृतेन बिम्बेन मूर्ध्नि स्फुरता सुधांशोः ।
उत्क्षिप्तबालव्यजनातपत्रः व्यनक्त्यसौ क्षोणिधराधिपत्यम् ॥ ७६ ॥

इस पर्वत को दोनों पाश्र्वों की ओर वहते हुए सफेद पानी के झरने चमर या सफेद वालों के वीजने की शोभा दे रहे हैं, शिर पर चन्द्रमण्डल छत्र वना हुआ है, इनसे यह अपने पर्वतों के आधिपत्य को दिखा रहा है ॥ ७६ ॥

उपत्यकापातविसृत्वराणां कदम्बकैर्निर्झररश्मिकाणाम् ।
आशांगनानां स्तनभूधरेषु हारावलीकान्तिमसौ विधत्ते ॥ ७७ ॥

यह पर्वत अपनी उपत्यकाओं में गिरने के कारण फैले हुए झरनों की किरणों की पांतियों से दिगङ्गनाओं के स्तनस्थानीय पर्वतों पर मुक्ताहारों की शोभा कर रहा है ॥ ७७ ॥

मरन्दपूरैस्सह माधवीनां मञ्जीरसिन्धोः प्रवहन्ति कुल्याः ।
मधुव्रतानां पटलेन साकं कादम्बिनी चात्र करोति केलिम् ॥ ७८ ॥

मञ्जीर सिन्धु की छोटी छोटी लहरियां माधवी लताओं के फूलों की मधु के प्रवाह के साथ वह रही हैं, यहां मेघमालाएं भौंरों के दल के साथ खेल कर रही हैं ।। ७८ ।।

अरण्यमालोकय चोलपाण्डचमध्यस्थितं तन्वि! महद्‌गभीरम् ।
यत्रासते भानुमदंशुपुञ्जाद्वित्रासमुत्सृज्य तमस्समूहाः ।। ७९ ।।

हे पतले से शरीरवाली गोदे! चोल और पांडच के बीच के वन को देख, यह कितना वडा गम्भीर है, यहां ही दिन में अन्धकार का समुदाय सूर्यकिरणों के समुदाय से होनेवाले भय को छोड कर रहता है।। ७९ ।।

कलापिचञ्चूधृतकञ्चुकीन्द्रफणामणिप्रापितदीपिकेषु ।
क्रीडां वितन्वन्ति किरातयोषाः गुहागृहेष्वत्र कुशेशयाक्षि ।। ८० ।।

हे कमलनयने! किरातों की स्त्रियां इस वन की गुफारूपी गृहों में मोर के चोंच से पकडे गयें सांपों के फनों की मणियों के दीपक के प्रकाश में क्रीडा कर रही हैं ।। ८० ।।

चोलेषु दृष्टिं सुतनो! विधेहि कवेरकन्यासलिलाप्लुतेषु ।
मन्दानिलान्दोलितपूगपाली-निष्यन्दिशीथूत्करदुर्दिनेषु ।। ८१ ।।

हे सुन्दर शरीरवाली! चोलदेश पर दृष्टि डाल, यह कावेरी के पानी से भीगा हुआ रहता है, तथा इस देश में मन्द मन्द वायु से हिलती हुई सुपारी के गीले रस के समुदाय से सदा दुर्दिन वना रहता है ।। ८१ ।।

गोदे! पुरः पश्य पतिं नदीनां महानसं मन्मथमर्दनस्य ।
उत्पत्तिभूः पत्युरसावुडूनां शय्यागृहं शाश्वतमस्मदीयम् ।। ८२ ।।

हे गोदे! देख यह सामने समुद्र है, कामदेव के मर्दन करनेवाले का (शिव का) यह महानस (पाकशाला) है, तथा नक्षत्रों के पति चन्द्रमा की यह जन्मभूमि है, और हमारा तो यह सदा का शयनागार ही है ।। ८२ ।।

**अयं धरण्याः प्रियमन्तरीयममुं समस्तास्सरितश्श्रयन्ते ।**
**आविष्कृतं किञ्चन निर्जराणामायुष्कलाकारणमप्यनेन ॥ ८३ ॥**

यही भूमि का प्यारा कटिवस्त्र है, इसी में आकर सब नदियां गिरती हैं, देवताओं की उम्र बढाने की कला का कारण भी इसने प्रकट किया था ॥ ८३ ॥

**सारम्भजम्भारिकराधिरूढनिशातदम्भोलिनिपातभीतान् ।**
**शैलाधिराजान् शरणार्थिनोऽयं वीचीभिराकारयतीव हस्तैः ॥ ८४ ॥**

क्रोधाविष्ट जो इन्द्र, उसके हाथ में धारण किये गये पैने वज्र के गिरने के डर से भयभीत अत एव शरणार्थी पर्वत राजों को, यह समुद्र तरङ्गरूपी हाथों से, शरण देनेवाले के कर्तव्य को पालन करता हुआ मालूम होता है, बुला रहा है ॥ ८४ ॥

**सैरावतोच्चैःश्रवसा च जिष्णुं यो जीवनेनापि च कालमेघम् ।**
**सोमेन चेशं सुधया च देवान् श्रीकौस्तुभाभ्याममपि मामताप्र्सीत् ॥**

इसने ऐरावत हाथी और उच्चैःश्रवा घोडे से इन्द्र को तृप्त किया, कालमेघ को पानी से प्रसन्न किया, चांद से शिव को प्रसन्न किया, अमृत से देवताओं को तुष्ट किया, और लक्ष्मी और कौस्तुभ रत्न से मुझे तृप्त कर दिया ॥ ८५ ॥

**परोपकारप्रतिपादनेन स्पर्धेत कस्सार्धमनेन साध्वि! ।**
**कल्पद्रुचिन्तामणिकामधेनुमुख्याश्च यज्जन्मजुषो वदान्याः ॥ ८६ ॥**

हे साध्वि! परोपकार के प्रतिपादन में इसके साथ कौन स्पर्धा कर सकता है, कल्पवृक्ष चिन्तामणि कामधेनु आदि भी इसीसे जन्म पाकर वर देनेवाले हुए हैं ॥ ८६ ॥

**पश्यार्णवाभ्यर्णवने चरन्तं बलाहृताध्वन्यधनाहितेन ।**
**परान्तकं भागवताहंणेन प्रसादलिप्सुं मम पद्मनेत्रे! ॥ ८७ ॥**

कमलनयने! इस परकाल को देख, यह समुद्र के समीप के वन में विचर रहा है तथा पथिकों के धनको वलपूर्वक छीन कर उससे किये गये वैष्णवपूजन द्वारा मुझे परितुष्ट करना चाहता है ॥ ८७ ॥

अद्याध्वगालोकनजागरूकान् अश्वत्थश्रृङ्गे विनिवेश्य योधान् ।
आस्तेऽत्र कान्ते! तदलाभखिन्नो मद्भक्तपूजाविरतेरसोढा ॥ ८८ ॥

हे प्रिये! इस समय यह परकाल पथिकों के देखने में सजग जो अपने वीरों को अश्वत्थ के शृङ्ग पर विठाकर स्वयं पथिकों के न मिलने के कारण खिन्नचित्त होकर वैठा हुआ है, यह इस वात को सहन नहीं करता कि मेरे भक्तों की पूजा बन्द हो ॥ ८८ ॥

मनोरथं वैष्णवभक्तितुष्टः प्रपूर्य तन्वङ्गि! परान्तकस्य ।
संयोज्य तं त्वत्कपितृव्यवर्गे तदीयकैङ्कर्यसुखं भजेयम् ॥ ८९ ॥

हे दुवले से शरीरवाली! मैं परान्तक की वैष्णवपूजा से परम प्रसन्न हूं। मैं अव इसके मनोरथ को पूरा करके इसे तेरे पिताओं की कोटी में पहुंचा कर, इसके द्वारा की गयी सेवाओं के सुख को भोगूंगा ॥ ८९ ॥

इत्यूचिवांस्तार्क्ष्यहयाधिरूढो जामातृवेषोचितभूषणश्रीः ।
आतिष्ठतास्मै भगवान् सभार्यः पुरोहितेनात्मभुवाऽनुयातः ॥ ९० ॥

यों कहकर भगवान् वर की वेषभूषा से सजे हुए, गोदासमेत गरुड को ही घोडा वना कर गोदा समेत उसपर चढे हुए, परान्तक के सामने आये। इनके पीछे पीछे पुरोहित ब्रह्माजी भी आ गये ॥ ९० ॥

नासीरसेनापतिपाल्यमाननागाननाग्रेसरपारिषद्यैः ।
धृतोपबर्हप्रकरैः परीतः फणीश्वरोत्क्षिप्तसितातपत्रः ॥ ९१ ॥

उस समय रङ्गनाथ भगवान् सेनामुख में सेनापतियों से सुरक्षित जो नागान, आदि सभासद थे, उनसे चारों ओर से घिरे हुए थे, और ये सब ऐश्वर्य के उपकरण को लेकर चल रहे थे, तथा शिरपर शेषनाग ने सफेद छत्र चढा रखा था ॥ ९१ ॥

योधैस्तदाऽधिष्ठितपिप्पलाग्रैः प्रदर्शितं सौम्यवरं विलोक्य ।
तुतोष तद्वित्तमसौ जिहीर्षुः यथाऽतिथेयोऽतिथिदर्शनेन ॥ ९२ ॥

परकाल के डाकू सिपाही पीपल की चोटी पर चढे हुए थे। इन्हों ने सुन्दर वर को दिखाया, उस समय तक परकाल को कोई भी लूट के लिये नहीं मिला था। देखते ही उनके धन छीनने की इच्छा से प्रेरित हो इस तरह प्रसन्न हुआ जैसे कि अतिथिसत्कार करनेवाला अतिथि को देख कर प्रसन्न होता है ॥ ९२ ॥

उदायुधैश्चोरभटैः परीतः कुत्रापि गुल्मे निभृतं निगूढः ।
त्यजत्यजाकल्पमिति ब्रुवाणो मुकुन्दमासन्नमसौ न्यरोत्सीत् ॥ ९३ ॥

परकाल के चोर वीरों ने अपनी तलवारें खींच रखी थी, जिनसे यह चारों ओर से घिरा हुआ था, किसी भी गुल्म के वीच इस तरह छिपा हुआ था कि इसे कोई देख न सके। आते हुए भगवान् को यह कहता हुआ कि, जो भी कुछ भूषण तेरे पास है, रख दो, रख दो, झठ आगे जाना रोक दिया ॥ ९३ ॥

आलोक्य घुष्यद्विरुदानकेन विधूतखण्डेन विभुं निरुद्धम् ।
क्रुद्धेभवक्त्रादिगणामराणां कोलाहलः कोऽपि तदा जजृम्भे ॥ ९४ ॥

उस समय परकाल के यश को घोषित करनेवाले नगाडे बज रहे थे। तलवार को घुमाते हुए आगे से रङ्गनाथ भगवान् को रोके हुए परकाल को देखकर गजानन आदि देववर्ग में क्रोध के कारण अभूतपूर्व कोलाहल मच गया ॥ ९४ ॥

अग्रेसरस्तस्य तदाशयज्ञो रङ्गेशसेनापतिरुज्जिहानान् ।
सुरान् गणेशानपि वेत्रभृङ्गस्पन्देन निष्पन्ददशामनैषीत् ॥ ९५ ॥

भगवान् रङ्गनाथ के आगे चलनेवाला उनका सेनापति भगवान् के मतलव को अच्छी तरह समझता था। उसने वेत की नोक के इशारे

से उन सजग हुए सुर और गणेशों को शान्त कर दिया, जो परकाल को देखकर सजग हुए थे ।। ९५ ।।

प्रशान्तवृन्दारकबृन्दवेगं निवृत्तगन्धर्वकदम्बगर्वम् ।
निरुद्धसिद्धप्रकरानुभावं विसृष्टविद्याधरवीरवादम् ।। ९६ ।।

देवों के समुदाय का वेग शान्त हो गया, गंधर्वों के समुदाय का गर्व निवृत्त हो गया, सिद्धों के समुदाय का प्रभाव रुक गया, विद्याधरों का वीरवाद चला गया ।। ९६ ।।

अपास्तवेधोरथपक्षपातमपेतभूतेशवृषप्रणादम् ।
अपोढशक्रद्विपबृंहितं तदाज्ञावशाद्व्योमतलं बभूव ।। ९७ ।।

उनकी (सेनापती की) आज्ञा से आकाश ऐसा हो गया जिसमें कि ब्रह्मा के रथ हंस के पंखों का पुरपुराना वन्द हो गया, शिव के वैल की रभाना न जानें कहां चली गयी, इन्द्र के हाथी की चिग्घारना न जानें कहां चली गयी। इस तरह आकाश निश्शब्द हो गया ।। ९७ ।।

मन्दायिताडम्बरपारिषद्यं वाचंयमीभूतपरांकुशादि ।
निराकृतोर्वीपतिदोर्विलासं निरस्तपत्रेशपदप्रचारम् ।। ९८ ।।

और वारात में होनेवाला कोलाहल ढीला पड गया, परांकुश आदि भक्त मौन हो गये, राजाओं की भुजाओं का विलास दूर हो गया, गरुड के पैरों का चलना शान्त हो गया ।। ९८ ।।

समुज्झिताशेषशकुन्तघोषं निश्चेष्टसिंहादिसमस्तसत्वम् ।
निर्मारुतं निश्चलवृक्षमासीच्चित्रस्थवद्भूतलमाज्ञयाऽस्य ।। ९९ ।।

और इनकी आज्ञा से वन के पक्षियों की ध्वनि न जाने कहां चली गयी, सिंह आदि सारे प्राणी चेष्टारहित हो गये, हवा का चलना वन्द हो गया, जिससे पेड निश्चल हो गये, मानो भूतल चित्रलिखितवत् हो गया ।। ९९ ।।

**एवं विभौ तस्थुषि निर्विकारे महाम्बुराशाविव निस्तरङ्गे ।**
**आकल्पपेटीरपहृत्य तूर्णमङ्गाच्च तस्याभरणान्यहार्षीत् ॥ १०० ॥**

इस प्रकार भगवान् ऐसे निर्विकार खडे हो गये थे, जैसे कि किसी महासमुद्र ने अपनी तरङ्गों का उठना बिलकुल रोक लिया हो, उस समय परकाल ने शीघ्र ही आकल्पपेटी (भूषणों की पेटी) को छीन कर उनके अङ्गों से भी आभरणों को छीन लिये। (अलङ्कार सामग्री रखने की पेटी को आकल्प पेटी कहते हैं) ॥ १०० ॥

**हृत्वा विभूषास्स यदा तदङ्गान्मुद्रोर्मिकां नाक्षमत ग्रहीतुम् ।**
**तदा जिघृक्षुर्दशनैर्विदश्य तत्प्राप देवात्कलियाभिधानम् ॥ १०१ ॥**

परकाल रङ्गनाथ भगवान् के अङ्गों के आभूषणों को छीन कर जव उनकी मुद्रिका यानी नाम से मुद्रित अंगूठी छीना, तो वह उसे ले न सका, तब उसे लेने की इच्छा से उसने उसे दातों से काटकर छीन लिया। उसी समय रङ्गनाथ भगवान् ने परकाल का नाम 'कलियन्' (समर्थ) रख दिया ॥ १०१ ॥

**एवं हृतैराभरणैस्तदङ्गादापूरितामात्मभटैस्सहापि ।**
**पेटीं समुद्धर्तुमसावशक्तो जगाद रोषात्सपुरोधसं तम् ॥ १०२ ॥**

इस प्रकार परकाल ने रङ्गनाथ भगवान् के शरीरों से आभूषण उतार-उतार कर एक पेटी भर ली। जब उसको अपने सिपाहियों की पूंण सहायता से भी न उठा सका, तब क्रोध से प्रेरित होकर पुरोहितजी समेत रङ्गनाथ भगवान् को कहने लगा कि ॥ १०२ ॥

**ममाद्य को वा युवयोरवादीन्मञ्जूषिकोत्तम्भनभङ्गमन्त्रम् ।**
**इत्यूचिवांसं धृतखड्गमूचे विधिर्न मे कृत्यमिदं वरस्य ॥ १०३ ॥**

इस समय आप दोनों में से किसने मेरी मंजूषा के उठाने को स्तम्भनमन्त्र (रोकने का मन्त्र) पढा है, यह कहते हुए हाथ में तलवार

लिये हुए परकाल को देख कर ब्रह्म वावा ने कहा कि यह हमारा काम नहीं है, यह तो इसी वर का काम है ॥ १०३ ॥

श्रुत्वा वचस्तस्य वरं जगाद मञ्जूषिकोत्तम्भनहेतुमन्त्रम् ।
ममाधुना ब्रूहि न चेदनेन क्रुद्धो हनिष्यामि महासिना त्वाम् ॥ १०४ ॥

ब्रह्मा के वचन सुनकर परकाल ने वर से कहा, कि 'यह पेटी उठाने का मन्त्र कहो, नहीं तो मैं क्रुद्ध होकर इस महाखड्ग से तुम्हें मार डालूंगा' ॥ १०४ ॥

इत्यूचिवांसं तमुवाच देवः पेटीसमुत्क्षेपकलार्हमन्यम् ।
वक्ष्यामि मन्त्रं भवतस्तदर्थं स्नात्वा त्वमागच्छ स चाकृतोक्तम् ॥

ऐसे कहते हुए परकाल से भगवान् बोले कि मैं पेटी उठाने की कला के योग्य दूसरा मन्त्र कहूंगा, उसके लिये आप स्नान करके चले आयें। यह सुनते ही परकाल स्नान करके चला आया ॥ १०५ ॥

अपारसंसारमहाम्बुराशिमज्जज्जनोत्तम्भनलब्धवर्णम् ।
अष्टाक्षरं मन्त्रवरं विनाम्य श्रीमानुपादिक्षदधोक्षजोऽस्मै ॥ १०६ ॥

जिसका पार पाना परम कठिन हैं, ऐसे संसाररूपी महासमुद्र में डूवते हुए जन को उठाने में समर्थ, ऐसे आठ अक्षरोंवाले श्रेष्ठ मन्त्र का उपदेश परकाल को नमस्कार करा करके भगवान् ने दिया ॥ १०६ ॥

अस्योपदेशेन तमस्यपास्ते ज्ञानोदये तादृशि जृम्भितेऽस्मै ।
स्वं रूपमष्टाक्षरमन्त्रवाच्यं प्रादर्शयद्विश्वमयं मुकुन्दः ॥ १०७ ॥

इस अष्टाक्षरमन्त्र का श्रीभगवान् के मुंह से उपदेश होते ही परकाल के अज्ञान का नाश हो गया तथा उत्तमज्ञान का उदय हो गया। उस समय रङ्गनाथ भगवान् ने अष्टाक्षर मन्त्र के वाच्य अपने विश्वमय स्वरूप के भी परकाल को दर्शन दिया ॥ १०७ ॥

**तथैव बद्धासिकमंसकूटे तार्क्ष्यस्य लक्ष्म्या सह गोदया च ।**
**पञ्चायुधालंकृतबाहुदण्डं स्तुतं विरिञ्चाग्रसरैस्सुरैश्च ।। १०८ ।।**

वैसे ही दोनों पैरों को नीचे लटकाये हुए लक्ष्मी और गोदा के साथ गरुड के कन्धे पर वैठे हुए थे, पांचों आयुधों से वडी-बडी भुजाएं शोभायमान थीं, ब्रह्मा आदि जितने देवता थे, वे सव आपकी स्तुतियां कर रहे थे ।। १०८ ।।

**समीक्ष्य बाष्पाम्बुभृतेक्षणस्य रोमाञ्चसञ्छन्नकलेबरस्य ।**
**आनन्दसिन्धुर्हृदयस्थितोऽस्य स्तवस्वरूपेण बहिर्जजृम्भे ।। १०९ ।।**

इस प्रकार देखकर परकाल की आखों में आंसू भर आये, शरीर में रोमांच हो आया, जो आनन्द का समुद्र परकाल के हृदय में विराजमान था, वह स्तुति के रूप में बाहर निकल आया ।। १०९ ।।

**चतुर्युताशीत्यधिकं सहस्रं गाथा यदीया द्रमिडोक्तिरूपाः ।**
**चक्रे बृहच्छ्रीवचनाभिधानं स तादृशं प्राथमिकं प्रबन्धम् ।। ११० ।।**

उस समय परकाल ने द्राविडभाषा की १०८४ गाथाओं में एक बृहच्छ्रीसूक्त (पेरिय तिरुमोऴि) नाम का प्रवन्ध रचा, यह अपने ढङ्ग का अनूठा परकाल का पहला प्रबन्ध था ।। ११० ।।

**स्वस्मै स्वरूपं सविभूति विष्णुरष्टाक्षरेण प्रकटीचकार ।**
**नीव्या सह द्रव्यमिवेदमर्थं स तत्र पद्यैर्दशभिर्बबन्ध ।। १११ ।।**

श्रीरङ्गनाथ भगवान् ने अष्टाक्षर मन्त्र से अपने निजस्वरूप को प्रकट किया था, जैसे कि कोई दाता धन के साथ वह बांधने का वस्त्र भी देता है। इस अर्थं का परकाल ने पूर्वोक्त ग्रंथ के दस पद्यों से विवरण किया ।। १११ ।।

**तत्रायमुत्कूलसुधाप्रवाहहृद्यैश्शतन्यूनसहस्रपद्यैः ।**
**तुष्टाव रङ्गेश्वरपार्श्वभाजो नारायणान् साष्टशतालयेन्द्रान् ।। ११२ ।।**

वहीं परकाल ने नौ सौ पद्यों से १०८ भगवानों की स्तुति की। ये उस समय रङ्गनाथ भगवान् की वगल में उपस्थित थे। उन पद्यों की रचना इतनी मधुर है जिसे देख कर यह मानना पडता है कि अमृत का प्रवाह किनारा काट कर वह रहा है ॥ ११२ ॥

**असौ चतुष्षष्ट्यधिकेन विष्णून् गाथाशतेनैष दशावतारान् ।**
**तत्रावशिष्टैर्दशभिश्च पद्यैः सार्धं तदा रङ्गिणमेवमाह ॥ ११३ ॥**

इन्हों ने १६४ गाथाओं से विष्णु भगवान् के दशों अवतारों की स्तुति की। अवशिष्ट दशपद्यों से साथ के साथ रङ्गनाथ भगवान् की स्तुति की और रङ्गनाथ से कहा ॥ ११३ ॥

**साशीविषे गेह इवोपविष्टं सांयात्रिकं मारुतभिन्ननावि ।**
**द्रुमं सरिद्भिन्नतटे द्विभागलग्नाग्निकाष्ठे च पिपीलिकौघम् ॥ ११४ ॥**

हे विभो! सांपवाले घर में रहनेवाले की जैसी दशा होती है, जैसी कि हवा से टूटी हुई नाव में बैठे हुए व्यापारी की जो दशा होती है, जैसी नदी से कटे किनारे के वृक्ष की दशा होती है, जैसी दोनों शिरे जिस के दहक रहे हैं, उस काठ पर रहनेवाले पिपीलिका पांति की दशा होती है ॥ ११४ ॥

**ओघस्य मध्ये महतस्सृगालमुद्भ्रामतापत्रयवीचिजाले ।**
**मामद्य संसारमहाम्बुराशौ मग्नं विभो! पालय पालयेति ॥ ११५ ॥**

महान् प्रवाह के बीच में डूवते हुए शृगाल की जैसी दशा होती है, उसी प्रकार की दशा संसाररूप महासागर में डूवते हुए मेरी हो रही है। हे विभो! मेरी रक्षा करें! मेरी रक्षा करें! ॥ ११५ ॥

**बन्धे कुरुन्दाण्डकनाम्नि गाथाविंशत्युपेते विदधे द्वितीये ।**
**भवश्रमध्वंसितया मुरारेः तद्धामसक्ता जनतेति धन्या ॥ ११६ ॥**

वीस गाथाओं का परकाल का दूसरा प्रबन्ध है, द्रामिडभाषा में इसे "तिरुक्कुरुत्ताण्डकम् (श्री छोटा दंडक)" कहते हैं। भवश्रम को दूर करनेवाले होने के कारण भगवान् के उस दिव्यस्थान में निवास करनेवाली जनता धन्य है इस प्रकार परकाल ने उक्त प्रबन्ध में कहा है ॥ ११६ ॥

**श्रीसप्तभागस्थितिनाम्नि पद्यैः चित्रे तृतीयेऽकृत स प्रबन्धे ।**
**पुराऽन्वभूवं मनसेति बाह्याश्लेषाद्गतिं शार्ङ्गिणमित्यवापम् ॥११७॥**

परकाल के बनाये हुए तीसरे सुन्दर प्रबन्ध का नाम द्राविड भाषा में 'तिरुवेऴुकूत्तिरुक्कै' यह है। इसका संस्कृत अनुवाद 'सप्त भागस्थिति' किया गया है। इसमें परकाल ने ऐसी ही बहुतसी बातें कहीं हैं कि पहिले मैंने मानसिक अनुभवों से ही भगवान को पाया था, पर अब मैं वाह्य आलिङ्गन से उपायभूत रङ्गनाथ भगवान् को पा गया ॥११७॥

**श्रीमन्महास्वाल्पदलाख्यबन्धद्वये चतुर्थेऽकृत पञ्चमे च ।**
**योक्तुं पुराणं त्वरया पुमांसं भाग्याद्रुपायान्तरमित्यलप्सि ॥ ११८ ॥**

परकाल ने लघुपालीप्रबंध (शिरिय तिरुमडल्) व गुरुपालीप्रवंध (पेरिय तिरुमडल्) नामके अपने चौथे और पांचवें प्रवन्ध में यही प्रतिपादन किया कि परमपुरुष के साथ शीघ्र ही योग करने के लिये दूसरे दूसरे उपाय मुझे भाग्य से मिले हैं ॥ ११८ ॥

**श्रीमन्नेडुन्दाण्डकनाम्नि गाथात्रिंशत्समेये चरमे प्रबन्धे ।**
**कारुण्यसिन्धोः कमलापतेस्स्वमभीष्टलाभक्रममाचचष्ट ॥ ११९ ॥**

परकाल के अन्तिम प्रबन्ध का नाम 'श्रीमन्नेडुन्दाण्डक' है। यह तीस गाथाओं का बनाया गया है। इसमें परकाल ने करुणासिन्धु कमलापति से जिस प्रकार अपना अभीष्ट प्राप्त हुआ है, वह क्रम बताया है ॥ ११९ ॥

**निशम्य तेनाकलितान् प्रपन्नैः शठारिमुख्यैस्सह षट्प्रबन्धान् ।**
**संयोज्य भक्तेष्वपि तं प्रहृष्टो बभूव रङ्गाभिमुखस्स रङ्गी ॥ १२० ॥**

भगवान् रङ्गनाथ श्री शठकोप आदि प्रपन्नवर्गों के साथ बैठकर परकाल के छओं प्रवन्धों को सुनकर परमप्रसन्न हुए। उन्हें अपनी भक्त गोष्ठी में मिलाया, पीछे आप रङ्गक्षेत्र की ओर चल दिये ।। १२० ।।

गत्वा रङ्गपुरीं व्यसर्जयदसौ रङ्गेश्वरो गोपुरे
प्रत्यावृत्य गिरा वृषाचलपतिं हासादिभाद्रीश्वरम् ।
लोलापाङ्गनिरीक्षणादुपवनक्षोणीधरेशं शिरः-
कम्पेनापि च शार्ङ्गपाणिमितरान् भ्रूसंज्ञया चाच्युतान् ।। १२१ ।।

जिस समय रङ्गनाथ भगवान् नगर के द्वार पर पहुंचे, वहां पहुंच कर उन्होंने सवको सन्मानपूर्वक सङ्केतमात्र से वापिस कर दिया। वेङ्कटेश भगवान् को वाणी से, तथा हस्तिपर्वतवासी भगवान् को हास से वापिस किया, एवं चञ्चल आखों के देखने से उपवन के पर्वत (वनगिरि) के अधिपति को लौटा दिया, शिरके इशारे से शार्ङ्गपाणि को भेज दिया। एवं दूसरे भगवानों को भौंओं के सङ्केत से उनके उनके स्थानों को भेज दिया ।। १२१ ।।

आलोकेनाब्जयोनिं गिरिदुहितृपतिं केलिसंलापभङ्ग्या
निर्देशेनांगुलेश्च त्रिदशपतिमुखान् दिक्पतीन् सर्वदेवान् ।
विष्वक्सेनाननेन क्षितिपतितिलकान् वल्लभादीन् विसृज्य
श्रीरङ्गी भक्तवर्गैस्सह हरिरगमत्ताररूपं विमानम् ।। १२२ ।।

अपने कटाक्ष से ब्रह्मा को, केलि की बातों के इशारे से शिव को, अंगुलियों के इशारे से देवपतियों दिक्पतियों और सव देवों को, तथा विष्वक्सेन के मुख से वल्लभादिक मुख्य राजाओं को विदा कर पीछे आप अपने भक्तों के साथ तार अर्थात् प्रणवरूप विमान को चले गये ।। १२२ ।।

त्रयोदशस्सर्गः समाप्तः ।

---

# चतुर्दशस्सर्गः

अथ सैनिकेन सकलेन वृतो वृषशैलनायकसिषेविषया ।
निर्याय रङ्गपतिनाऽनुमतः प्रतिवेङ्कटाद्रि परकालविभुः ॥ १ ॥

इस के उपरान्त परकालसूरि ने रङ्गनाथ भगवान् की आज्ञा प्राप्त करके श्रीवेङ्कटेश भगवान् के सेवन की इच्छा से प्रेरित हो कर अपने समस्त सैनिकों के साथ वेङ्कटाचल की ओर प्रस्थान किया ॥ १ ॥

स पथि व्रजन् दिनमणेः किरणैः दिनयौवनं गतवतः कठिनैः ।
ग्लपितां न्यवीविशदवेक्ष्य चमूं तटसीम्नि तादृशि पयस्सरितः ॥ २ ॥

मार्ग में चलते-चलते दोपहर के सूर्य की तीखी किरणों के मारे परकाल की सेना कुम्हिला गयी, इससे उन्होंने अत्यन्त मनोहर क्षीर नदी के किनारे की सीमा पर पडाव डाला ॥ २ ॥

पिबतिस्म वारि सरसं तृषिता क्षुधिता बिसान्यभिनवान्यचरत् ।
दिनमध्यदारुणपतङ्गकरग्लपिता ममज्ज च जलेऽस्य चमूः ॥ ३ ॥

प्यासी सेना ने सरस पानी पिया एवं भूख के मारे नये-नये कमलों की भालो खाये तथा सूर्यनारायण की कठिन किरणों के मारे सन्तप्त हो कर पानी में गोते लगाये ॥ ३ ॥

भगवान् विचिन्त्य परकालविभुं सहसैनिकेन मधुजित्क्षुधितम् ।
पथि वृद्धवैष्णवमहीसुरतामवलम्ब्य पाण्डवपुराविरभूत् ॥ ४ ॥

विष्णु भगवान् ने साचा कि परकाल और परकाल के सैनिक भूख से व्याकुल हो रहे हैं, झठ पथ में ही आप पथिक वन गये। उस समय आप वृद्ध वैष्णव ब्राह्मण का रूपधारण करके परकाल के सामने आये ॥ ४ ॥

अवबद्धमन्नमधिपाणि वहन्नरविन्दबीजतुलसीस्रगितः ।
विमलोर्ध्वपुण्ड्रनिचितापघनो जरसाऽऽकुलो विहितमन्दगतिः ॥ ५ ॥

ये कमल और तुलसी की माला पहिने हुए थे, माथे में श्रीवैष्णवी ऊर्ध्वपुण्ड्र लगे हुए थे, बुढापे से व्याकुल लकडी टेक-टेक कर धीरे-धीरे चलते थे, गठरी मे बंधे हुए अन्न हाथ में लिये हुए थे ॥ ५ ॥

**स विलोक्य वृद्धमवदत्किमिदं तव पुस्तकं वसति पाणितले ।**
**तिथितारकाकरणयोगदिनान्यभिधत्स्व सम्प्रति विविच्य मम ॥ ६ ॥**

परकाल ने इस वृद्धब्राह्मण से पूछा कि आप के हाथ में कोई पुस्तक है? अगर पुस्तक है तो इस समय मेरे कैसे दिन नक्षत्र करण और योग है, सो तो देख कर कहिये ॥ ६ ॥

**अपि च क्षुधाऽद्य सकलं च बलं परिबाधते सह मया विबुध! ।**
**अवबद्धमन्नमिदमर्पयता भवताऽस्मदार्तिमपनेतुमलम् ॥ ७ ॥**

हे विप्रवर्य! इस समय और तो क्या मुझे और मेरी सारी सेना को भूख सता रही है। आप के पास जो यह अन्न है, इसे मुझे दे दीजिये जिस से हम सब की क्षुधा-बाधा दूर हो जायगी ॥ ७ ॥

**इति तेन तत्र पथिकः कथितः तमवोचदित्थमधुनाप्रभृति ।**
**हरिवारयोगकरणोडुतिथीरवधेहि नात्र विशयः क्रियताम् ॥ ८ ॥**

इस प्रकार जब परकाल ने उस पथिक ब्राह्मण से कहा तो वह पथिक ब्राह्मण बोला कि तुमने जो पूछा है सो मैं कहता हूं। आज से तुम्हारे तिथि नक्षत्रादि सब हरिमय हो गये। इसमें किसी प्रकार का सन्देह न करना ॥ ८ ॥

**इदमन्नमप्यतिसृजाम्यसमं भवते बलाय च विभज्य समम् ।**
**इति मुष्टिमात्रमददान्मुदितः प्रतिपूरुषं घनकृपाजलधिः ॥ ९ ॥**

मेरे हाथ में जो यह उत्तम अन्न है, उसे मैं आप और आपकी सेना में बराबर बांट देता हूं। ऐसे कहकर प्रसन्न हो एक-एक मुष्टि अन्न बडी कृपा करके कृपानिधि भगवान् ने प्रत्येक को दे दिया ॥ ९ ॥

# चतुर्दशस्सर्गः

अथ सैनिकेन सकलेन वृतो वृषशैलनायकसिषेविषया ।
निर्याय रङ्गपतिनाऽनुमतः प्रतिवेङ्कटाद्रि परकालविभुः ॥ १ ॥

इस के उपरान्त परकालसूरि ने रङ्गनाथ भगवान् की आज्ञा प्राप्त करके श्रीवेङ्कटेश भगवान् के सेवन की इच्छा से प्रेरित हो कर अपने समस्त सैनिकों के साथ वेङ्कटाचल की ओर प्रस्थान किया ॥ १ ॥

स पथि व्रजन् दिनमणेः किरणैः दिनयौवनं गतवतः कठिनैः ।
ग्लपितां न्यवीविशदवेक्ष्य चमूं तटसीम्नि तादृशि पयस्सरितः ॥ २ ॥

मार्ग में चलते-चलते दोपहर के सूर्य की तीखी किरणों के मारे परकाल की सेना कुम्हिला गयी, इससे उन्होंने अत्यन्त मनोहर क्षीर नदी के किनारे की सीमा पर पडाव डाला ॥ २ ॥

पिबतिस्म वारि सरसं तृषिता क्षुधिता बिसान्यभिनवान्यचरत् ।
दिनमध्यदारुणपतङ्गकरग्लपिता ममज्ज च जलेऽस्य चमूः ॥ ३ ॥

प्यासी सेना ने सरस पानी पिया एवं भूख के मारे नये-नये कमलों की भालो खाये तथा सूर्यनारायण की कठिन किरणों के मारे सन्तप्त हो कर पानी में गोते लगाये ॥ ३ ॥

भगवान् विचिन्त्य परकालविभुं सहसैनिकेन मधुजित्क्षुधितम् ।
पथि वृद्धवैष्णवमहीसुरतामवलम्ब्य पाण्डवपुराविरभूत् ॥ ४ ॥

विष्णु भगवान् ने साचा कि परकाल और परकाल के सैनिक भूख से व्याकुल हो रहे हैं, झठ पथ में ही आप पथिक वन गये। उस समय आप वृद्ध वैष्णव ब्राह्मण का रूपधारण करके परकाल के सामने आये ॥ ४ ॥

अवबद्धमन्नमधिपाणि वहन्नरविन्दबीजतुलसीस्रगितः ।
विमलोर्ध्वपुण्ड्रनिचितापघनो जरसाऽऽकुलो विहितमन्दगतिः ॥ ५ ॥

ये कमल और तुलसी की माला पहिने हुए थे, माथे में श्रीवैष्णवी ऊर्ध्वपुण्ड्र लगे हुए थे, वुढापे से व्याकुल लकडी टेक-टेक कर धीरे-धीरे चलते थे, गठरी मे वंधे हुए अन्न हाथ में लिये हुए थे ॥ ५ ॥

**स विलोक्य वृद्धमवदत्किमिदं तव पुस्तकं वसति पाणितले ।**
**तिथितारकाकरणयोगदिनान्यभिधत्स्व सम्प्रति विविच्य मम ॥ ६ ॥**

परकाल ने इस वृद्धब्राह्मण से पूछा कि आप के हाथ में कोई पुस्तक है? अगर पुस्तक है तो इस समय मेरे कैसे दिन नक्षत्र करण और योग है, सो तो देख कर कहिये ॥ ६ ॥

**अपि च क्षुधाऽद्य सकलं च बलं परिबाधते सह मया विबुध! ।**
**अवबद्धमन्नमिदमर्पयता भवताऽस्मदार्तिमपनेतुमलम् ॥ ७ ॥**

हे विप्रवर्य! इस समय और तो क्या मुझे और मेरी सारी सेना को भूख सता रही है । आप के पास जो यह अन्न है, इसे मुझे दे दीजिये जिस से हम सब की क्षुधा-वाधा दूर हो जायगी ॥ ७ ॥

**इति तेन तत्र पथिकः कथितः तमवोचदित्थमधुनाप्रभृति ।**
**हरिवारयोगकरणोडुतिथीरवधेहि नात्र विशयः क्रियताम् ॥ ८ ॥**

इस प्रकार जव परकाल ने उस पथिक ब्राह्मण से कहा तो वह पथिक ब्राह्मण वोला कि तुमने जो पूछा है सो मैं कहता हूं । आज से तुम्हारे तिथि नक्षत्रादि सब हरिमय हो गये। इसमें किसी प्रकार का सन्देह न करना ॥ ८ ॥

**इदमन्नमप्यतिसृजाम्यसमं भवते बलाय च विभज्य समम् ।**
**इति मुष्टिमात्रमददान्मुदितः प्रतिपूरुषं घनकृपाजलधिः ॥ ९ ॥**

मेरे हाथ में जो यह उत्तम अन्न है, उसे में आप और आपकी सेना में वरावर वांट देता हूं । ऐसे कहकर प्रसन्न हो एक-एक मुष्टि अन्न बडी कृपा करके कृपानिधि भगवान् ने प्रत्येक को दे दिया ॥ ९ ॥

**ववृधे तदन्नमरविन्ददृशा प्रतिपादितं रसविधूतसुधम् ।**
**दधिदुग्धमाक्षिकगुडाज्यसुधाबहुभक्ष्यभोज्यरसनीययुतम् ॥ १० ॥**

भगवान् की कृपा से वह अन्न बढ गया । उस अन्न में अमृत के समान रस था। एवं दही, दूध, मधु, गुड, घी आदि बहुतसी भक्ष्यभोज्य और स्वादिष्ट वस्तुओं से मिश्रित था ॥ १० ॥

**स परान्तकस्सह बलेन तदा विगतक्षुधो द्विजमुवाच पुनः ।**
**किमिहागतोऽसि तव को विषयः वद नामधेयमपि किं भवतः ॥११॥**

उस अन्न से परकाल और परकाल की सैनिक दोनों ही तृप्त हो गये । पीछे परकाल उस ब्राह्मण से पूछने लगे कि आप कहां से आये? आप का देश कौनसा है? एवं आप का नाम क्या है? ॥ ११ ॥

**इति तेन वैष्णववरो गदितः निजगाद क्लृप्तविनतिं पुरतः ।**
**प्रथमानदन्तरुचिपूरमिषात्स्नपयन्निवैनममृताम्बुनिधौ ॥ १२ ॥**

परकाल यह वात नम्रता के साथ सामने खडे हो कर पूछ रहे थे, भगवान् तो वैष्णवों के वश है ही, झठ हंसते हुए अपने दंतपंक्तिप्रकाशरूप अमृत के समुद्र में परकाल को स्नान कराते हुए वोले ॥ १२ ॥

**सुमनोहरं किमपि काञ्चयभिधं पुरमस्ति तस्य किल पश्चिमतः ।**
**निवसामि धाम्नि मम नाम पुनः परमष्टबाहुनरसिंह इति ॥ १३ ॥**

कि एक भली भांति मनोहर काञ्ची नाम का नगर है, उसके पश्चिमभाग में मैं रहता हूं। मेरा नाम अष्टवाहु नरसिंह है॥ १३ ॥

**हरिरित्युदीर्य पुरतोऽन्तरधात्स च विस्मितस्स्वहृदयेऽकलयत् ।**
**सबलाय वत्सलतया प्रददौ क्षुधिताय मह्यममृतान्नमसौ ॥ १४ ॥**

भगवान् ऐसा कह कर झट उनके सामने ही अन्तर्धान हो गये । यह देख परकाल विस्मित हो अपने हृदय में विचार करने लगे कि

वात्सल्य से प्रेरित हो कर भगवान् ने मुझे और मेरी सब सेना को अमृतान्न दिया है ।। १४ ।।

स मयाऽप्यपृच्छि किल कस्त्वमिति प्रतिभाषतेस्म निजनाम च मे ।
स भवेद्ध्रुवं नृहरिरष्टभुजः धृतपञ्चहेतिफलकाब्जशरः ।। १५ ।।

जब मैंने उन से पूछा कि आप कौन हैं, तो उन्होने अपना नाम भी मुझे बता दिया । यह निश्चय है, यह अष्टभुज नृसिंह ही होंगे दूसरा कोई नहीं, अवश्य ही ये पञ्चायुध धारण करनेवाले अष्टभुज नृसिंह भगवान् हैं ।। १५ ।।

स हि वामनस्स हि यदुप्रवरः स हि राघवस्स हि वराहवपुः ।
स हि मेऽधिदैवमिति तद्विषयां नुतिमाततान दशपद्यमिताम् ।। १६ ।।

यही वामन हैं, यही कृष्ण हैं, यही राघव हैं, यही वराह भगवान् हैं, यही मेरे देव हैं, इस प्रकार भगवान् के विषय में दस पद्योंवाला एक स्तोत्र बनाया ।। १६ ।।

चलितस्ततः कतिपयैर्दिवसैः स ददर्श वेङ्कटगिरिप्रवरम् ।
कुहनाकिरातपदतामरस-द्वितयार्पणक्रमपवित्रतटम् ।। १७ ।।

इसके बाद श्री परकालजी ने वहां से प्रस्थान किया और थोडे ही दिनों में वेङ्कटाचल पर्वत के दर्शन कर पाये, जिसके तटभाग कपट किरात वेषधारी भगवान के चरणार्पण से पवित्र है ।। १७ ।।

गुहवापिकाविकसदब्जवनीमधुगन्धतुन्दिलमरुत्पृथुकम् ।
शठकोपपुष्करसुपर्वनदीमुखपुण्यतीर्थलहरीमुखरम् ।। १८ ।।

स्वामिपुष्करणी में खिले हुए कमलों के रस की सुगन्धि से भरा हुआ मन्दमन्द वायु जहां चल रही है, एवं जो श्रीशठकोप पुष्करिणी और सुपर्वनदी आदि मुख्य पुण्यतीर्थों के प्रवाहों के शब्द से शब्दायमान हो रहा है ।। १८ ।।

विकसत्प्रसूनमधुपानकलामुदितद्विरेफरटितार्भटिभिः ।
मुखरं प्रपन्नजनसन्नविपत्पटलप्रयाणपटहध्वनिभिः ॥ १९ ॥

खिले हुए फूलों के रस पीने की कला से प्रसन्न हुए भौंरे वारंवार मधुर गुंजार कर रहे हैं, मानों प्रपन्न जनों की आपदाओं के प्रयाणकाल के पटहध्वनि हो रही है ॥ १९ ॥

नटदेकनीलगलमुत्समिषाद्रजताचलं परिहसन्तमिव ।
सततप्रवृत्तनटनारभटीपटुनीलकण्ठनिकुरुम्बतया ॥ २० ॥

इस पर्वत पर सैकडों नीलकण्ठ मोर सदा नाच रहे हैं, इससे मानों एक नीलकण्ठवाले कैलास का बहते हुए झरनों के व्याज से परिहास कर रहा है ॥ २० ॥

स समेत्य पादमुरगेन्द्रगिरेः अवसत्त्रिरात्रमुरुभक्तितया ।
न तमारुरोह मनसाऽऽकलयन्कमलानिवासचरणाम्बुरुहम् ॥ २१ ॥

उस शेषाचल पर्वत के समीप पहुंच कर तीन दिन तक निवास किया। भगवान् की उत्कट भक्ति के कारण उस पर्वत पर चढे नहीं। पर मन से श्रीनिवास भगवान् के चरणकमल का ध्यान करते रहे ॥

पुरतोऽस्य वत्सलतया भगवानहिराजशैलपतिराविरभूत् ।
अयमप्यभीष्टमधिगत्य ततः स्तुतिमातनोन्मधुमिदे मधुराम् ॥ २२ ॥

परकाल के ऊपर जो वेङ्कटेश भगवान् का वात्सल्यभाव था, इससे प्रेरित होकर वे उनके सामने प्रकट हो गये। परकाल भी अपने अभीष्ट वेङ्कटेश भगवान् को पाकर उनके लिये ललित स्तुति करने लगे ॥ २२ ॥

कटकान्निरेत्य फणिराजगिरेः सकलं निषेव्य हरिधाम पथि ।
समुपार्जितोर्जितधनस्सबलः भजतिस्म रङ्गनगरं परजित् ॥ २३ ॥

परकाल वेङ्कटाचल पर्वत की मेखला पार करके रास्ते में जितने भगवान् के दिव्यदेश मिले, उन सब का दर्शन करते हुए बहुतसा धन इकट्ठा करके, सेनासहित रङ्गनगर लौट आये ॥ २३ ॥

प्रणिपत्य रङ्गिपदपङ्कजयोः वसुना निजेन दृढभक्तिरभूत् ।
समहानसावरणयुग्मपुरस्सरकृत्यषट्ककरणप्रवणः ॥ २४ ॥

रङ्गनगर में पहुंच कर रङ्गनाथ भगवान् के चरणों में जाकर प्रणाम किया । यह दृढभक्त परकाल ने अपने धन से रसोई घर और दो परकोटा आदि कैंकर्य करने में लग गये ॥ २४ ॥

स परान्तकः किल चतुर्थमहावरणादिनिर्मितिकलावसरे ।
कमपि व्यलोकत तदध्वगुहागतयोगिनं दृढसमाधिविधिम् ॥ २५ ॥

उस परकाल ने वडे भारी चौथे परकोटा के वनाने के समय किसी योगी को उसके रास्ते की गुफा में देखा, जिसकी कि समाधि दृढ थी ॥ २५ ॥

तमुपेत्य जातविनयः परजित्स्तुतिभङ्गिपूर्वकमपृच्छदिति ।
अवनौ न्यषेवि हरिधाम कियत्कति पुष्कराण्यपि पुरा भवता ॥२६॥

परकाल उन योगिराजजी के पास पहुंच कर परम विनम्र हो गये और प्रार्थनापूर्वक उनसे पूछने लगे कि आपने पहिले भूमण्डल के कितने दिव्यदेशों का सेवन किया है और कितने तीर्थों पर आप स्नानार्थ पधारे हैं ॥ २६ ॥

इति तेन योगितिलको गदितः परकालमाह विनयावनतम् ।
हरिधाम साष्टशतमैक्षि मया भुवि पुण्यतीर्थततिरप्यखिला ॥ २७ ॥

परकाल से इस प्रकार पूछे जाने पर नम्रता से नवे हुए परकाल से योगिराज कहने लगे कि मैंने भगवान के १०८ धाम देखे हैं तथा भूमण्डल पर जितने भी पुण्यतीर्थ हैं, वे सब देखे हैं ॥ २७ ॥

स तमाह निर्गमनकारि वचः शृणु पश्चिमे हिमवतः शिखरे ।
महतीं गुहामधिगतो नृहरिः वरदो न्यषेवि विततोष्टभुजः ।। २८ ।।

परकाल ने उस योगी को वहां से हटाने की इच्छा से उनसे कहा, कि क्या, आपने पश्चिम हिमाचल के शिखर पर गुफा के भीतर बैठे हुए आठ भुजावाले नरसिंह भगवान् का दर्शन किया है? ।। २८ ।।

किमु न न्यषेवि भवता नृहरिः नखकोटिपाटितमहादनुजः ।
इति तद्वचश्श्रवणहृष्टमनाः तमुपासितुं मुनिवरो निरगात् ।। २९ ।।

जिन नरसिंह भगवान् ने अपने नखों की कोर से बड़े भारी असुर को फार डाला था, क्या उनका दर्शन आपने नहीं किया। परकाल के ये वचन सुनकर योगिराज प्रसन्न हुए और नृसिंह भगवान् की उपासना करने के लिये चल दिये ।। २९ ।।

वितथेतरं परमभक्तवचः प्रतिपादयन्नरहरिर्भगवान् ।
तुहिनाद्रिमूर्धनि गभीरगुहाकुहरे तथैव मुनिना ददृशे ।। ३० ।।

परमभक्त परकाल के वाक्यों को सत्य करने के लिये नृसिंह भगवान् ने हिमवान् के शिखर पर की गहरी गुफा में जैसा कहा था वैसे ही उस योगिराज को दर्शन दिया ।। ३० ।।

स विलोक्य विस्मितमना नृहरिं तमुपास्त योगितिलकस्सुचिरम् ।
परजित्स सालकरणाद्वसुना रहितो बभूव सहितो यशसा ।। ३१ ।।

वह योगिराज नृसिंह भगवान् को देख कर बड़े ही अचम्भे में पड गये। इधर परकाल श्रीरङ्गनाथ के मन्दिर का प्राकार बनवाने लगे। इससे उनका यश तो खूब हुआ, किन्तु पास का द्रव्य सब खर्च हो गया ।। ३१ ।।

स पुनस्तृतीयखिलसालकृतावविचक्षणस्स्वयमपोढधनः ।
अनुजीविनो रहसि चौर्यकलाकुशलानुवाच परकालविभुः ।। ३२ ।।

परकाल फिर टूटे हुए तीसरे प्राकार को बनाना चाहते थे। पर धन के अभाव से असमर्थ थे। चोरी करने में चतुर सेवकों को बुलाकर एकान्त में कहा ॥ ३२ ॥

**न विलोकये वसु तृतीयमहावरणं विधातुमधुनेषदपि ।**
**किमु वाऽत्र कार्यमधुनेति विभोः द्रविणागमक्रमविधौ भणत ॥ ३३ ॥**

मेरे पास थोडासा भी धन नहीं है, जिससे यह तीसरा परकोटा वनाया जा सके। क्या, इस समय भगवान् को तीसरा कोट नहीं वनाना है, यदि वनाना है तो धन कैसे आये? यह वताओ ॥ ३३ ॥

**इति तस्य वाचमवगम्य भटाः तमवादिषुर्विदितचौर्यकलाः ।**
**सकलेषु कर्मसु वयं द्रविणाहरणोचितेष्वधिगताः पटुताम् ॥ ३४ ॥**

परकाल के अनुजीवी इनकी इन वातों का मतलव समझ कर परकाल से वोले, जो चोरी के काम में वडे चतुर थे। महाराज! हम धन चुराने के सव कामों में वडे ही निपुण हैं ॥ ३४ ॥

**चतुराः प्रहृत्य रभसात्पथिकानधिकाननं धनमवाप्तुमलम् ।**
**दिवसे विलोकितमपि द्रविणं दिवसेऽपहर्तुमशकाम वयम् ॥ ३५ ॥**

हम इतने चतुर हैं कि वन में पान्थों को शीघ्र ही लूटकर उनके धन को प्राप्त कर सकते हैं और तो क्या यदि दिन में हमें दिखलाई पड जाय कि धन यहां है, तो हम दिन में ही उसे वहां से उडाने के लिये समर्थ हो सकते हैं ॥ ३५ ॥

**अररार्गलाविघटनारभटीपटुमूलमाचरितमन्त्रजपाः ।**
**बिभृमोऽञ्जनं च निधिलाभकरं जनमोहकृत्किमपि चूर्णमपि ॥ ३६ ॥**

हमने मन्त्र सिद्ध कर रखा है और किवाडों का अर्गल विना आवाज के ही हटानेवाली औषधि भी हमारे पास है। हमारे पास ऐसा अञ्जन है, जिससे हम पृथ्वी के भीतर की निधि को देख सकते हैं,

एवं चूर्ण भी हमारे पास ऐसा है, जिसकी एक बुरकी से मनुष्य वेहोश हो जाय ॥ ३६ ॥

**शलभान् प्रदीपशमनान् सिकतागुणचर्मकर्कटकरज्जुघटान् ।**
**कृतकं शिरश्च बिभृमोऽत्र वयं दृढभित्तिभेदपटुदण्डमपि ॥ ३७ ॥**

हमारे पास ऐसे पतङ्ग हैं जिन्हें छोडते ही वे दीपक को वुतादें, रेती धनुष की ज्या, चाम, कर्कटक, (कमन्द) रज्जु और घडे हम अपने पास रखते हैं, यहां हम नकली शिर भी लिये हुए हैं, एवं सेंध फोडने के हथियार भी हमारे पास हैं, जिन से कैसी भी पक्की भींत क्यों न हो टूट जाय ॥ ३७ ॥

**प्रथमाब्धिपश्चिमतटाभरणायितनागपट्टणवरे किमपि ।**
**कनकात्मकं वसति बौद्धकुलप्रतिपादितं सुगतबिम्बमुरु ॥ ३८ ॥**

पूर्वसमुद्र के पश्चिमी किनारे के आभूषण वने हुए नागपट्टण में सोने की बडी भारी बुद्ध भगवान् की एक प्रतिमा है, जिसे बौद्धों ने स्थापित की है ॥ ३८ ॥

**तदपाहरेम भवता तरसा सुसमेत्य तत्र तपनीयमयम् ।**
**इति तद्वचश्श्रवणहृष्टमनास्तुरगास्थितस्स सबलो निरगात् ॥ ३९ ॥**

हम आप के साथ चलेंगे और उस सुवर्ण की वुद्ध मूर्ति को वहां से ले आवेंगे । परकाल यह सुन कर परमप्रसन्न हुए और घोडे पर सवार हो सेना के साथ वहां से नागपट्टण के लिये रवाना हो गये ॥ ३९ ॥

**धृतसौगताकृतिरवाप्य पुरं तदवेक्ष्य धाम सुगतस्य पुनः ।**
**सुदुरासदं पिहितमार्गतया सुचिरं बभूव परिखिन्नमनाः ॥ ४० ॥**

नागपट्टन के पास पहुंच कर परकाल ने बुद्धोंका सा वेष वना लिया । पीछे वह स्थान देख लिया जहां वह प्रतिमा थी । उसका रास्ता छिपा हुआ था, जिसे देख कर परकाल बहुत समय तक खिन्नचित्त रहे ॥ ४० ॥

**स कमप्यपृच्छदथ तक्षवरं तदभिज्ञमाह स पुनस्तमिति ।**
**इदमामन्त्युपरिक्लृप्तपथं सुगतस्य धाम तदुदन्तविदः ॥ ४१ ॥**

वहां परकाल को कोई अच्छा बढई मिल गया जो उस रहस्य को जानता था । परकाल ने उससे पूछा कि हमें इस प्रतिमा तक जाने आने का रास्ता बताओ । उसने कहा कि इस के जाननेवाले कहा करते हैं कि इसका रास्ता ऊपर होकर है, सो यह है ॥ ४१ ॥

**इति तक्षवाक्यमवगम्य ततो व्यघटिष्ट धामशिखरं पिहितम् ।**
**स तदन्तरर्गलकवाटतया न हठात् प्रवेष्टुमजनिष्ट पटुः ॥ ४२ ॥**

इस के बाद वह उस बढई की बातों को समझ कर मन्दिर के छिपे हुए शिखर को पहिचान कर रास्ता निकाला । वहां किवाड बन्द थे जिनके भीतर से अर्गल लगा हुआ था । परकाल इस काम में चतुर थे, पर उस में सहसा न घुस सके ॥ ४२ ॥

**झषकच्छपादिदशरूपजुषः पुरुषस्य रङ्गनगराधिपतेः ।**
**चरणारविन्दशपथेन तदा स तदन्तरर्गलभिदां व्यधत ॥ ४३ ॥**

मच्छकच्छपादि दश अवतार लेनेवाले रङ्गनगर के अधिपति जो रङ्गनाथ भगवान् हैं उनके चरणकमलों की सोगन्द से परकाल ने उस गुप्त द्वार के भीतर के अर्गला को काटा ॥ ४३ ॥

**पिहितारराविघटनाद्विवृते सति धामशृङ्गसरणीविवरे ।**
**स्वसृनाथमाप्तमवरोपितवान् दृढशृङ्खलाकलितमन्तरसौ ॥ ४४ ॥**

भीतर के अर्गल के हट जाने से किवाड खुल गया जो कि मन्दिर के शिखर से भीतर जाने के लिये बना था । झट परकाल ने विश्वास पात्र अपनी बहिन के पति को मजबूत साकल से बांध कर नीचे उतारने लगे ॥

**तमवेक्ष्य गर्भगृहमध्यगतं तपनीयबिम्बहरणप्रवणम् ।**
**चकिताः सुवर्णसुगतानुगताः प्रतिमा विलेपुरिति मुक्तगलम् ॥ ४५ ॥**

जिस मन्दिर में सोने की बौद्ध प्रतिमा को लेने परकाल गये थे, उसमें बुद्ध के अनुयायियों की भी दूसरी-दूसरी धातुओं की मूर्तियां थीं, वे सब प्रतिमाएं गर्भगृह के बीच में पहुंचे हुए एवं सोने की बुद्धमूर्ति के चुराने में लगे हुए परकाल के वहनोई को देखकर डरकर गला फाड-फाड कर रोने लगी ।। ४५ ।।

न विशिष्टधातुतनवोऽत्र वयं त्रपुसीसपिच्छटकताम्रमयाः ।
अयमेव हेमसुगतः पुरतः तदमुं गृहाण विविधाभरणम् ।। ४६ ।।

यहां हम रांगा सीसा पीतल और तामेके बने हुए शरीरवाले हैं, सोनेके शरीरवाले नहीं हैं, देखो यही आपके सामने सोने का वौद्ध खडा है जो अनेक तरह के आभूषणों से लदा हुआ है, आप इसे लेलें ।। ४६ ।।

स तथागतोऽपि कनकात्मतया विपदागतेति परिचिन्त्य तदा ।
निरगाद्यथारुचि सुवर्णतनोः प्रसवाद्यथा मधुकरोऽपचितात् ।। ४७ ।।

उस बुद्ध ने भी यह सोचा कि मुझे सोने का होने के कारण ही यह विपत्ति आई । उसी समय झट उसने वो सोनेका शरीर ऐसा छोड दिया जैसे तोडे हुए फूल में से भौंरों उड जाता है ।। ४७ ।।

समुदञ्च्य काञ्चनमयीं प्रतिमां स वरत्रया नियमितामकरोत् ।
अपकृष्य रज्जुकृतबिम्बमिदं बहिरप्रहोष्ट परकालविभुः ।। ४८ ।।

परकालने वहनोई की सोने की मूर्ति को ऊपर उठाकर चमडे की रस्सी से बांध दी और परकाल ने ही उस रस्सी को खींच कर मूर्ति ऊपर उठा ली ।। ४८ ।।

भगिनीपतिं सपदि गर्भगृहादधिरोढुमक्षममवेक्ष्य गुणैः ।
अवकृष्य किञ्चिदिव तस्य शिरः स तदाऽच्छिनत्करगृहीतकचः ।।

जब भगिनीपति को गर्भगृह से ऊपर चढने में असमर्थ देखा, तव कमन्द फेंक कर उसको ऊपर खींचा । वे इसके बाद अत्यन्त वोझिल

**जहिहि शुचमिमां सहस्व रात्रिं तव दयितः पुनरेष्यति क्षपान्ते ।**
**इति निजकरुणस्वनैरलीनां कुलमिदमम्बुजिनीमिवान्वरोदीत् । ९५ ॥**

उस समय भौंरों का कुल अपने करुणशब्दों से यह कहता हुआ कमलिनो को सान्त्वना दे रहा है, इस वियोग के शोक को छोड दे। एक रात की बात है, वियोग का दुःख सह जा, तेरा प्यारा पति प्रातःकाल होते ही फिर तेरे पास आ जायगा ॥ ९५ ॥

**अपरजलधिविद्रुमांशुवीप्सा चरमधराधरधातुपौनरुक्त्यम् ।**
**नभसि पदमधत्त सान्ध्यरागो वरुणपुरीवनिताङ्गरागभेदः ॥ ९६ ॥**

आकाश में फैली हुई सायङ्काल की लाली ऐसी मालूम होती थी, कि पश्चिम समुद्र में पडे हुए मूंगे की किरणों को दुहराती हुई, पश्चिमाचल के गेरू के रङ्ग को बढाती हुई वरुणपुरी की स्त्रियों के रक्तचन्दन के समान है ॥ ९६ ॥

**गगनजलनिधिप्रवालजालं मनसिजभूपभुजप्रतापवह्निः ।**
**अपरदिगबलापदाब्जलाक्षा चरममहीभृदशोककर्णपूरः ॥ ९७ ॥**

आकाशरूपी महासमुद्र के मूगों का जाल और मन्मथ महाराज के भुजा के प्रताप की अग्नि की रङ्गत, मूंगों के समुदाय की तरह शोभायमान हो रहो थी, पश्चिम दिशारूपी स्त्री के चरणकमलों के महावर दिखा रही थी और पश्चिमी पर्वतरूपी राजा के कान पर रखे हुए अशोकपुष्प के गुच्छे ॥ ९७ ॥

**नवकिसलयजालमम्बरद्रोः तिमिरमधुव्रतरक्तपद्मवन्या ।**
**अरुणयवनिका नटत्पुरारेः विरहकृशानुशिखा रथाङ्गनाम्नाम् ॥ ९८ ॥**

यह आकाशवृक्ष की नयी-नयी किसलयों का जाल था, एवं अन्धकार रूपी भौंरों के रहने के लिए लालकमलों का वन, नाट्य में नाचते हुए शिवजो के लालरङ्ग का परदा था, चकवी चकवाओं की विरहाग्नि की लौ थी ॥ ९८ ॥

**गतवति चरमाम्बुधौ निपत्य प्रणयिनि चण्डरुचावगोचरत्वम् ।**
**अनुमरणचिकीर्षया दिनश्रीविहितशिखीव रराज सान्ध्यरागः ॥९९॥**

प्यारे सूर्य के पश्चिमी समुद्र में गिरकर अदृश्य हो जाने पर, उस के साथ सहगमन करने की इच्छा से दिनलक्ष्मी की बनाई हुई चिताग्नि के समान सायङ्काल की लाली शोभायमान हो रही थी ॥

**अथ कुसुमकदम्बमम्बरद्रोः उडुनिकुरुम्बमजृम्भतावदातम् ।**
**दिनविगमनटत्कपर्दमूर्धप्रसृतमरुत्सरिदूर्मिशीकराभम् ॥ १०० ॥**

सन्ध्या के बीत जाने पर आकाशवृक्ष के खिले हुए फूलों के समुदायों की भांति तारों का सुन्दर तथा स्वच्छ समुदाय शोभायमान होने लग गया । इसकी चमक, सायङ्काल के समय नाचते हुए शिव के शिर से निकले हुए देवनदी की लहरों के जलकण की सी थी ॥१००॥

**ध्रुवमखिलदिशानितम्बिनीनां कबरभरत्वमथादियं तमिस्रा ।**
**सितमुडुनिकुरुम्बमप्ययासीत्तदुदरसंयतपुष्पदामशोभाम् ॥ १०१ ॥**

यह अंधेकार ऐसी मालूम होता था कि संपूर्ण दिशारूपी स्त्रियों के केशवेश की राशि है, इस में कभी-कभी चमकनेवाले तारों के समूह केशो में वन्धी हुई पुष्पमाला की शोभा पा रहे थे ॥ १०१ ॥

**वियदसितसरोजभृङ्गसंघो मनसिजबाहुमहोऽग्निधूमपालिः ।**
**रजनियुवतिमेचकोत्तरीयं त्रिभुवनकाननकेलिदन्तिबृन्दम् ॥ १०२ ॥**

आकाश के नीले कमलों के भोंरों के सुमुदाय सा, तथा कामदेव की बडी-बडी तेजस्वी भुजाओं की आग के धूये की पंक्ति सा, एवं निशारूपी नवयुवती की काली ओढनी और तीनों लोकरूपी वन में क्रीडा करते हुए हाथियों का समुदाय ॥ १०२ ॥

**विरहिजनकरालकालदूतः विलसदुलूकदृगञ्जनप्रपञ्चः ।**
**दशहरिदबलाशिरोजभारः गगनमहार्णवशैवलप्ररोहः ॥ १०३ ॥**

विरहियों के लिए कराल यमदूत था, घुग्घू की आंखों के लिए काला अञ्जन था, दसो दिशारूपी स्त्रियों की केशराशि था, आकाशरूपी महासमुद्र का शैवाल था ॥ १०३ ॥

**विरहिमशकमण्डलैकधूमः विषमशरद्विरदेन्द्रदानपूरः ।**
**गगनवनतमालतल्लजश्रीः गरलरुचिस्समजृम्भतान्धकारः ॥ १०४ ॥**

वह विरही जनरूपी मच्छरों के मण्डल के धूँआ था। कामदेव रूपी मदमत्त महागज के मदजल का प्रवाह था, आकाशरूपी वन के सुन्दर तमाल वृक्षों की शोभा था, जहरका सा रङ्ग था, ऐसा अन्धकार छाये हुए था ॥ १०४ ॥

**घनपटलसनाभिभिस्तमोभिः निखिलदिशाञ्च निचोलितेऽन्तराले ।**
**सकलजनविलोचनापमृत्युप्रशमभिषग्विधुकान्तिरुन्मिमेष ॥ १०५ ॥**

मेघमण्डल की जातिवाले अन्धकारों ने सारी दिशाओं के बीच को ढक दिया था, उसी समय सब मनुष्यादि की दृष्टि की अपमृत्यु के निवारक राजवैद्य की तरह चन्द्रमा की चान्दनी निकली ॥ १०५ ॥

**शशिनि पिबति शर्वरीरमण्या मुखमनुरागिणि मीलिताम्बुजाक्षम् ।**
**तदुदितबहलश्रमाम्बुबिन्दुश्रियमकरोदुडुबृन्दमन्तरिक्षे ॥ १०६ ॥**

प्रेमी चांद अपनी प्रेमी रात्रि के मुख का चुम्बन ले रहा था, जिस मुख में कमलरूपी आखें बन्द हैं। उस समय आकाश में तारों का समुदाय, उस चुम्बन से उत्पन्न हुए श्रम के कारण पसीने की शोभा दे रहा था ॥ १०६ ॥

**निवसनमसितं दिगङ्गनानां तिमिरसमूहमभंगुरं निरस्य ।**
**विधुरमलदूकूलमेष दत्ते विसृमरदीधितिकन्दलच्छलेन ॥ १०७ ॥**

यह चांद, दिशारूपी सुन्दरियों के काले वस्त्र गाढ तम को दूर करके, फैलनेवाली किरणों के छोटे से ममुदाय के बहाने, सफेद साडी दे रहा है ॥ १०७ ॥

**विकचकुमुदकाननान्तरालस्फुरितरजःपुनरुक्तचन्द्रिका द्यौः ।**
**विहरदुदधिवीचिशीकराली पुनरुदितोडुपरम्परेव रेजे ।। १०८ ।।**

खिले हुए कुमुदवन के बीच बिखरे हुए रजकण के कारण आकाश में दुगुनीसी चांदनी छिटकी हुई थी । [खिले हुए श्वेतकमलों के वीच में बिखरी हुई कमलों की रज, फिर कही हुई सी प्रतित होती थी ।] वह वढते हुए समुद्र की तरङ्गों की बूंदों की पंक्ति में फिर उदय हुए तारों की पंक्ति के समान सुशोभित हो रही थी ।।१०८।।

**उदयति सकलाः कला दधाने तिमिरमपायमियाय यन्मृगाङ्के ।**
**युगपदिव तमश्चचर्व दूर्वाकबलधिया हरिणस्तदङ्गसङ्गी ।। १०९ ।।**

संपूर्ण कलाओं को धारण किये हुए मृगलाञ्छन चन्द्रमा के उदय होने पर, अन्धकार उनके शरीर में लीन हो गया था, मानों चन्द्रमा के शरीरसाथी हिरण, चन्द्रमा के उदय के साथ ही साथ तम को अपना दूब समझकर चर गया हो ।। १०९ ।।

**कुमुददलकवाटकुञ्चिकानां तृषितचकोरगणार्तिभञ्जिकानाम् ।**
**युवजनवृषजालपिञ्छिकानां दिवि पटलं विससार चन्द्रिकाणाम् ।।**

जो कुमुदों के दलरूपी किवाडों को खोलनेवाली चाभी है, प्यासे चकोर की प्यास को वुझानेवाली है, युवकों के इन्द्रियजालों के लिए वाजीगर की कूंची है, उस चांदनी का पटल (समूह) आकाश में फैल गया ।। ११० ।।

**उदयगिरिकरीन्द्रकण्ठशंखो मदनमहीपतिमौक्तिकातपत्रम् ।**
**तुहिनकिरणबिम्बमाबभासे गगनसरस्स्मयमानपुण्डरीकम् ।। १११ ।।**

चन्द्रमण्डल इस प्रकार शोभायमान हो रहा था, मानों आकाश रूपी सर का खिला हुआ श्वेतकमल हो, अथवा काम राजा का मोतियों का छत्र हो, या उदयाचलरूपी बडे भारी हाथ के कण्ठ का शंख हो ।।१११।।

उडुपरिबृढबिम्बरूप्यपात्रे विमलमयूखदशे सुधाज्यपूर्णे ।
असृजदुदयरागदीपमादौ मधुमथनाय पितृप्रसूर्मुहूर्तम् ।। ११२ ।।

अमृतरूपी घी से भरे हुए, चमकती हुई निर्मल किरणरूपी वत्ती वाले, एवं तारों से घिरे हुए बिम्बरूपी चांदी के पात्र में, सब से पहले सन्ध्या ने एक मुहूर्तभर भगवान् के लिए उदयकालीन लालिमारूपी दीपक जला दिया ।। ११२ ।।

विधिवदुपहृताञ्छुभे मुहूर्ते मणिमयपात्रगतान् विलोक्य दीपान् ।
निरगमदवलोकितुं विमानादधिशिबिकं स मनोज्ञतालदीपम् ।।११३।।

श्री भगवान् रङ्गनाथ मणिजटित पात्रों में सजाये गये, एवं विधि के साथ शुभमुहूर्त में नसाये गये, दीपकों को देखकर विमान (श्रीमन्दिर) से पालकी में वैठकर, सुन्दर तालदीपों को देखने चल दिये ।। ११३ ।।

मधुरिपुरथ हेतिराजधाम्नः मघवदिशाभिमुखास्थितः पुरस्तात् ।
उपरिरचितदीपिकं पुरस्ताज्ज्वलितमपश्यदसौ महाप्रदीपम् ।।११४।।

भगवान् रङ्गनाथ सुदर्शनमन्दिर से पूर्वदिशा की ओर मुंह करके खडे हो कर महाप्रदीप को देखा तो जिसके ऊपर चारों तरफ छोटे-छोटे दीये लगे हुए थे ।। ११४ ।।

व्यतनुत रमणीयतालनालं शिखिकणदर्शितकेसराभिरामम् ।
विततबहुशिखादलं सधूम्यामधुकरपंक्ति महाप्रदीपपद्मम् ।। ११५ ।।

यह महाप्रदीप कमल की तरह शोभा पा रहा था, सुन्दर तालरूपी इसका नाल था, अग्निकण कमल के केसर की तरह शोभायमान दीख रहे थे, बहुतसी वडी-वडी शिखाएं ही इसके दल थे, उठती हुई मनोहर धूमरेखा, भोंरों की पंक्ति की तरह शोभायमान हो रही थी ।। ११५ ।।

दिवि विसृमरया प्रदीपवह्नेः किरणपरम्परया कृतोपगूहाः ।
वलभिदुपवनद्रुमा मुहूर्तं ज्वलितमहौषधिसन्निभा विरेजुः ।। ११६ ।।

दीपकों की लट की ऊपर स्वर्ग में फैली हुई किरणों की लगातार पांतियों से छिटे हुए लपेट रखा है, ऐसे दीपक से मुहूर्तभर, इन्द्र के नन्दन वन के वृक्ष संजीवन बूटी (ज्योतिष्मतीं) के समान जगमगाट कर रहे थे ।। ११६ ।।

पुनरपि पुरवैरिवीर्यतप्तस्सुरसरिति ज्वलनः पपात नूनम् ।
अपि च सकललोकदत्तमिष्टं हविरिह दातुमिवोत्थितस्सुरेभ्यः ।।

फिर भी पुरारि शिवजी के वीर्य से तपा हुआ अग्निदेव, निश्चय ही, शान्ति पाने के लिए आकाशगङ्गा में गिर गया है, एवं ऐसा मालूम होता है, देवताओं को सब लोकों के द्वारा दिये गये इष्ट हवि को देने के लिए ऊपर उठ गया हो ।। ११७ ।।

मुररिपुरुपरिस्फुरत्प्रदीपे प्रशममुपेयुषि कान्ततालवह्नौ ।
जलनिधितनयालयाध्वनाऽसौ वरवरमण्डपभद्रपीठमाप ।। ११८ ।।

जब महादीपक शान्त हो चुका, तब भगवान् रङ्गनाथ महालक्ष्मी के मन्दिर के रास्ते *वरवरमण्टप में पहुंच कर †भद्रपीठ पर विराजमान हुए । यह दीपक सब के ऊपर था एवं अत्यन्त सुन्दर था, जिसका पहिले वर्णन किया जा चुका है ।। ११८ ।।

कलिरिपुकलितां नुतिं स शृण्वन् दशविधभृत्यनिवेदितस्तदात्वे ।
निरुपमशठकोपगीतगाथानिशमनकौतुकनिघ्नमानसोऽभूत् ।। ११९ ।।

---

*अळहियमणवाळन् तिरुमण्डपम् ।

†शेरपाण्डियन् सिंहासनम् ।

परकाल के बनाये हुए स्तोत्रों को सुनते हुए प्रकार के सेवकों की प्रार्थना से श्री शठकोप के बनाई हुई दिव्यगाथाओं के सुनने के लिए तन्मनस्क हो गये ॥ ११९ ॥

जगदुदयभृतिप्रणाशहेतुं विधृतहृता वरगन्धमाल्यपूर्वम् ।
परिजनमुखतस्तमानिनीषुश्शठरिपुपार्श्वमनीनयन्निदेशम् ॥ १२० ॥

श्री शठकोपसूरि को बुलाने के लिए अपने परिजन के द्वारा अपने उतारे हुए चन्दन और पुष्पमालाओं के साथ आज्ञापत्र भेजा, जिस आज्ञा के वश संसार की सृष्टि, स्थिति और संहृति हुआ करती है ॥ १२० ॥

शठजिदपि समुत्थितः पुरस्तात्प्रतिहरिशासनमागतं प्रणम्य ।
शिरसि च स निधाय गानहेतोः निरगमदुज्वलतैलसिक्तकण्ठः ॥

श्री शठकोप स्वामी भी सामने जाकर आये हुए भगवान् के शासन के प्रति प्रणाम कर के उसे अपने शिरपर रख उज्वल तेल से कण्ठ को सींच कर गाने के लिए चल दिये ॥ १२१ ॥

## हिमसमयवर्णनम्

अथ हिमसमयस्समाविरासीत्सरसिजकाननचारुतान्तरायः ।
अलघुतुहिनवृष्टचलीकवर्षो दयितवियुक्तवधूकृतान्तदंष्ट्रा ॥ १२२ ॥

इसके बाद हिमऋतु का समय पहुंच गया। यह कमलवन के सुन्दरता का विनाशक था। इसमें बरफीली स्थानों पर निरन्तर वर्फ की वर्षा होती रहती थी। जिस प्यारी वधूटी से उसका प्यारा अलग हो गया है, उसके लिए तो वह शीतकाल की ही दाढ था ॥ १२२ ॥

तुहिनभरमशेषतोऽपनेतुं द्युमणिरलं न घनं करैस्तदाऽभूत् ।
लघुरपि महतीं विवृद्धिमाप्तः भुवि महतोऽपि भवेद्धि कृच्छ्रसाध्यः ॥

भगवान् सूर्यदेव जिन किरणों से ग्रीष्मकाल में धरती और आकाश को तपा दिया करते थे, उन्हीं किरणों से इस समय भी वह काम नहीं कर सकें, यही बात नहीं थी, इस समय तो शीत भी हटना कठिन था। छोटा भी कोई वृद्धि को प्राप्त हो जाता है तो वह वडों-वडों का कष्टसाध्य हो जाता है, यह निश्चित बात है ॥ १२३ ॥

**अविरलपतितैस्तुषारपूरैः हिमसमयस्सहसा सरोरुहाणाम् ।**
**श्रियमहृत न केवलं वधूटीविरहिजनस्य च वक्त्रपङ्कजानाम् ॥१२४॥**

शरदी के काल ने निरन्तर गिरे हुए हिमद्वारा, केवल कमलों की ही शोभा को नष्ट किया हो, यह बात नहीं है, किन्तु नई बहू के, विरही जनों के मुखकमल की आभा को भी इसके साथ-साथ हर लिया है ॥ १२४ ॥

**विशददशनकान्तिपूरकम्रं विरचितसीत्कृतिविभ्रमाभिरामम् ।**
**अधरदलमसोढ नाङ्गनानां युवहठचुम्बनडम्बरं तदात्वे ॥ १२५ ॥**

उस समय सुन्दरियों के नीचे के होठ, युवकों के बलपूर्वक चुम्बन के आडम्बर को न सह सके। ये होठ, दातों की रोशनी के फैले हुए पूर से शोभायमान लग रहे थे, एवं निरन्तर जो सीतकारी का विभ्रम उससे अभिराम थे ॥ १२५ ॥

**हिममहिमरुचस्स्वनाशहेतोः कमपि निकारमशक्नुवद्धि दातुम् ।**
**कमलवनमपीडयत्तदिष्टं प्रहरति हि प्रबलाहतस्तदीयान् ॥ १२६ ॥**

हिम ने अपना नाश करनेवाले सूर्य का और तो कोई अपकार नहीं कर सका, किन्तु उसने सूर्य के प्यारे कमलवन को यथेष्ट पीडा पहुंचाई; क्यों कि प्रबल का सताया हुआ उसका कुछ न कर सकने पर भी उसके साथियों को दाव लगे पर अवश्य सताता है ॥ १२६ ॥

**जलनिधिदुहितुस्स्वसोदरायाः मुखरुचिलेशविडम्बिनीति रुष्टः ।**
**तुहिनरुचिरुपाहरत्तुषारैः ध्रुवमरविन्दकदम्बकस्य लक्ष्मीम् ॥ १२७ ॥**

अपनी सहोदर जो समुद्र की लडकी लक्ष्मी, उसके उज्वल मुख की रुचिलेश की विडम्बनो करनेवाली है, इस कारण नाराज हुए चन्द्रमा ने अपने शीत से कमलों के समुदाय की शोभा को हर लिया है, ऐसा प्रतीत होता है ॥ १२७ ॥

**विकसितशतपत्रिकासुगन्धौ विपुलतुषारकणानुषङ्गशीते ।**
**विहरति मरुदंकुरे जनानां मनसि मनोजकृशानुरुद्दिदीपे ॥ १२८ ॥**

शीत के बहुत से कणों का सङ्ग मिल जाने से शीतल हुए, एवं खिली हुए काठकोरी की सुगन्धि लिये हुए पवन के चसने पर, मनुष्यों के कामाग्नि प्रचण्ड हो कर दगदगाने लगी ॥ १२८ ॥

**समुदितवति रङ्गिणे तदशे कृतमदनौजसि मासि मार्गशीर्षे ।**
**दधिगुडघृतदुग्धमुद्गभक्तान्युषसि विबोधमहांश्चकार लोकः ॥ १२९ ॥**

भगवान् के अंशभूत और कामदेव का तेज बढानेवाले मार्गशीर्ष मास के उत्पन्न होने पर भक्तजनों ने उषःकाल में दही, गुड, घृत, दूध, व मग के मिश्रित अन्न का भोग लगाकर, उनका सुप्रभात महोत्सव भी मनाया ॥ १२९ ॥

**द्विजवरकृतसाङ्गवेदपारायणसहितद्रमिडागमश्रवेण ।**
**दशशतपदचित्रमण्डपस्थो हरिरनयद्दिनविंशतिं तदात्वे ॥ १३० ॥**

उस समय पर भगवान् श्री रंगनाथ ने एक हजार स्तंभवाले अलंकृत मंटप में विराजमान हो श्रेष्ठ ब्राह्मणों के कृत साङ्गवेद और श्रेष्ठ द्राविड वेदपाठ के श्रवण से बीस दिनों को विताया । (धनुर्मास में बीस दिनों का बडा अध्ययनोत्सव चलता है) ॥ १३० ॥

**गतवति मकरं तदा पतङ्गे शतपदमण्डपमाससाद रङ्गी ।**
**सहयुवतिजनैरनेकडोलाविहृतिमहानुभवं चिकीर्षमाणः ।। १३१ ।।**

सूर्य के मकर राशि पहुंचने पर श्री रंगनाथ भगवान् ने अपनी पटरानियों के साथ डोला (झूला) महोत्सव का अनुभव करने की इच्छा से एक सौ स्तंभवाले मंडप को प्राप्त किया ।। १३१ ।।

**मधुरिपुरधिरुह्य रत्नडोलां सममवरोधजनेन तत्र ।**
**मदकलमहिलाधिरूढडोलाविहरणविभ्रमप्यसौ ददर्श ।। १३२ ।।**

मधु के हंता भगवान् ने उस मंडप में पटरानियों के साथ रत्नमय डोला पर विराजमान हो समद-युवतियों के झूलने के उत्सव को भी देखा ।। १३२ ।।

**सुतनुमणिकदम्बकानुविद्धां मधुमथनो भ्रमितां ददर्श डोलाम् ।**
**भुवनविजयमन्त्रवावदूकस्मरकरपद्मविवर्तिताक्षमालाम् ।। १३३ ।।**

भगवान् मधुसूदन ने श्रेष्ठ युवतियों के युत झूलनेवाली डोला को, जो समस्त लोकों को जीतने में समर्थ मंत्र का जप करनेवाले कामदेव के कर कमलों से फिरायी जानेवाली माला के सदृश था, देखा ।। १३३ ।।

## शिशिरर्तु वर्णनम्

**अतिसुरभिरनिद्रकुन्दपुष्पैरथ शिशिरस्समयस्समाविरासीत् ।**
**यदुदितमसहिष्णुनेव शीतं दिनमणिनाऽऽपि दिशामुखं कृशानोः ।।**

फिर विकसित कुंदपुष्पवाला और अत्यंत सुगंधवाला शिशिर-ऋतु आ गया, जिसके उदय का, मानों सहन नहीं करता हुआ, सूर्य देव ने भी अग्नि की दिशा को प्राप्त किया ।। १३४ ।।

**उरसि न निवसेद्रमा हरेश्चेद्वपुषि च सामि गिरेस्सुता पुरारेः ।**
**अधिमुखमधिपा गिरां च धातुः कथमिव ते शिशिरव्यथां सहेरन् ।।**

यदि लक्ष्मीजी भगवान् के दिव्यशरीर में, पार्वती देवी त्रिपुरारी शिवजी के पास ही, और वाग्देवी सरस्वती ब्रह्माजी के मुख में वास नहीं करतीं, तो वे कैसे शीत बाधा का सहन कर सकेंगे? ॥ १३५ ॥

**कमलमुखशिलीमुखेषु तस्मिन् निबिडतुषारनिपातसंहृतेषु ।**
**रतिपतिरतनिष्ट शीतमेकं विरहिजनैक्यविधानदक्षमस्त्रम् ॥ १३६ ॥**

उस समय पर कामदेव ने घनिष्ठ हिम के पतन से पीडित कमल के मुखरूपी वाणों में, केवल थंडी को ही, विरही युवजनों के मिलाने का अस्त्र वनाया ॥ १३६ ॥

**विलसदगुरुधूपितैर्निकेतैः कुटिलदृशां कुचमण्डलैश्च कोष्णैः ।**
**कथमपि शिशिरस्य धाम नैषुः स्फुरितहंसतिकयाऽपि केऽपि धन्याः ॥**

कितने धन्य पुरुषों ने श्रेष्ठ अगुरु से धूपित अंतर्गृहों, एवं कुटिल नेत्रवाली स्त्रियों के सुखोष्ण स्तनों, एवं उज्वल अंगीठी के सहारे उस शीत समय को विताया ॥ १३७ ॥

**प्रतिसरविधिपूर्वमादिधातुः महविधये झषमासि रोहिणीभे ।**
**सुरगणमुपहूय भेरिनादैः हरिरधिरोपयति स्म तार्क्ष्यकेतुम् ॥ १३८ ॥**

मीन मास के रोहिणीनक्षत्र के दिन भगवान् ने आदि ब्रह्मोत्सव मनाने की इच्छा से रक्षावंधनपूर्वक समस्त देवगणों को भेरीनाद पूर्वक बुलाकर गरुडध्वज को फैलाया ॥ १३८ ॥

**कुमुदमुखगणेशक्लृप्तसप्तावरणसुपर्वबलिः कृताग्निकार्यः ।**
**अधिगतवरकायमानवाहः निशि स परीत्य विवेश धाम वीथीः ॥**

भगवान् कुमुदादि गणाधिपतियों के लिए साथ आवरणों में वलि देकर, अग्निपूजा करके, श्रेष्ठ (पंदल नामक) वाहन पर विराज मान हो, वीथियों में पधारकर फिर शामको मंदिर पहुंच गये ॥१३९॥

मणिमयचतुरन्तयानमेत्योपवनगतोऽगमयद्दिनं द्वितीयम् ।
अधिगततुरगो दिनं तृतीयं गुहनगरोपवनेऽत्यवाहयत् सः ॥ १४० ॥

मणिमय चतुरंत वाहन पर विराजमान हो भगवान् ने दूसरा दिन बिताया ; तीसरे दिन तो घोडे पर सवार हो जीयर्पुर नामक नगर के उपवन में दिन बिताया ॥ १४० ॥

खगपतिरथमण्डपे चतुर्थं दिनमपवाह्य निशामुखेऽधिताक्ष्र्यम् ।
प्रतिविशिखमटन् प्रजाशये स्वां प्रतिदिशति स्म सभावनं तदात्वे ॥

चौथे दिन उन्होंने सारे दिन गरुडमंडप में विराजमान हो शामको गरुडजी पर सवार हो प्रत्येक वीथी में भ्रमण करते हुए प्रजाओं के मन में अपनी भावना को गाढ दिया ॥ १४१ ॥

दिवसमगमयत्स पञ्चमं श्रीजनिनिचुलानगरे विवाहदेशे ।
सकुसुमशिबिकान्तराधिरूढः समधिकवैभवमाससाद नक्तम् ॥ १४२ ॥

पांचवे दिन वे श्री लक्ष्मीजी के अवतारस्थल, निचुलापुरी में विवाहार्थ समग्र दिन बिताकर, अतिसुंदर पुष्पपालकी में विराजमान हो, रात को मंदिर पधारे ॥ १४२ ॥

कलशजदिशि वासरेऽथ षष्ठे दिनमपवाह्य पुनर्गजाधिराजम् ।
सपदि समधिरुह्य चारु गत्वा पुरविशिखास्ववरुह्य गेहमागात् ॥

छठे दिन में वे दक्षिण दिशा में दिन बिताकर फिर, गजराज पर सवार हो, वीथियों में भ्रमण करके मंदिर पधारे ॥ १४३ ॥

अधिगतशिबिको रमामहीभ्यां हरिरथ सप्तमवासरेऽपराह्णम् ।
पुनरकृत निशामयं हरिद्राकृततचूर्णसुदर्शनेन केलिम् ॥ १४४ ॥

सातवे दिन शाम को भगवान् ने श्रीभूदेवियों के साथ पालकी पर विराजमान हो, रात को हलदर के चूर्णाभिषेक महोत्सव खेला ।

विरचितविशिखाविहारकृत्यः स निशि रमागृहमेत्य तत्र कृत्वा ।
स्नपनविधिमुखाः क्रिया विमाने पुनरधिवीथि चरन् विवेश धाम ॥

उन्होंने शिकार खेलकर रात को लक्ष्मीजी के मंदिर पधारकर वहांपर स्नानादि से निवृत्त हो, फिर विमान में विराजकर वीथियों में भ्रमण करने के वाद स्वस्थान प्राप्त किया ॥ १४५ ॥

कृतनिजपुरपूर्वभागसीमातटविहृतिर्दिवसेऽष्टमे दिनादौ ।
अधिगततुरगः कदम्बतीर्थोपवनतलादभजत्स्वधाम सायम् ॥ १४६ ॥

आठवें दिन वे सवेरे ही अपनी नगरी की पूर्वदिशा की सीमा पर विहार करके घोडे पर सवार हो, कदंवतीर्थ के उपवन से अपने मंदिर पहुंचे ॥ १४६ ॥

नवमदिनविभातकल्पकाले स्वपनविबोधकलालसत्स्ववेषः ।
प्रतिगृहरचिताहणस्स वीथ्यामभजत मासदनं वितीर्य तीर्थम् ॥१४७॥

नवम दिन के वडे सवेरे ही उन्होंने शय्या से उठने के समय के उचित सुंदर वेष से युत हो, वीथि में पधारते हुए प्रत्येक मकान पर पूजा प्राप्त करके और अवभृत स्नान करके श्री लक्ष्मीजी के मंदिर को प्राप्त किया ॥ १४७ ॥

रथवरमधिरुह्य पुष्पकाख्यं प्रतिविशिखं व्यचरद्रमामहीभ्याम् ।
सह जनकजया प्रतिप्रयाणे स्वयमिव दाशरथिः पुरा स रङ्गी ॥१४८॥

श्रीरङ्गनाथ भगवान् पुष्पक नामक रथ पर श्रीभूदेवियों के साथ विराज कर, (लंका से अयोध्या) लौटते हुए श्री जानकीजी के सहित श्री रामचंद्रजी के समान शोभायमान हो, वीथियों में भ्रमण करने लगे ॥ १४८ ॥

स हरिरवभृथं समाप्य सायं दशमदिनेऽकृत पुष्पयागकृत्यम् ।
नियमितभणितिर्विसृज्य देवानभजत धाम परीत्य सप्तसालीम् ॥

अवभृतोत्सव को समाप्त करके उन्होंने दसवे दिन शाम को पुष्पयाग किया और सुमधुर वाणी से देवों को विदा देकर सप्तावरणों में घूमकर अपने धाम को प्राप्त किया ।। १४९ ।।

एवं श्रीरमणे यथर्तु विहृतिं प्रत्यब्दमातन्वति
श्रीरङ्गाञ्जनकुञ्जराचलमुखश्रीधामसु स्वास्पदात् ।
देशाद्दीपकवन्मृगानिव जनानाकृष्य शिष्यान् सरो-
मुख्यस्सूरिगणस्सिसेविषुरगाद्धामानि दिव्योत्सवान् ।।१५०।।

इस प्रकार श्री लक्ष्मीनाथ भगवान् श्रीरंग, श्री वेंकटाद्रि, श्री हस्तिगिरि इत्यादि दिव्य क्षेत्रों में प्रति वर्ष प्रत्येक ऋतु के अनुसार दिव्य उत्सव मनाते थे। तव श्री सरोयोगी आदि दिव्यसूरियों ने उन उत्सवों के दर्शनार्थ अपने अपने स्थानों से निकलकर शिष्यों को भी, दीप की सहायता से मृगों की भाँति, वश करके साथ लेकर उन उन धामों को प्राप्त किया ।। १५० ।।

स्वस्वान्तेवासिलोकं प्रपदनविलसद्भक्तिमार्गोपदेशात्
पारंपर्यात्प्रपन्नास्सकलमपि जनं त्रातुकामो नियोज्य ।
स्वस्वस्कन्धप्रबन्धद्रुम इव विटपस्तोमभूम्ना फलानां
हेतुं ज्ञात्वाऽन्वभूवन् परमपदमथ प्रेप्सवो योगनिष्ठाम् ।।१५१।।

फिर परंपरा से प्रपन्न वे दिव्यसूरिजन समस्त लोकों का उद्धार करना चाहते, अपने शिष्यों को प्रपत्ति से विभूषित भक्ति मार्ग का उपदेश देने की आज्ञा देकर, एवं यह जानकर कि वे उसी प्रकार अपने (दिव्यसूरियों के) प्रबंधों की भाँति शिष्य परंपरा के द्वारा फल देंगे, स्वयं परमपद पधारने की इच्छा से योगाभ्यास में निरत हुए ।।१५१।।

।। पञ्चदशस्सर्गस्समाप्तः ।।

———

# षोडशस्सर्गः

## श्रीमन्नाथ योगि वैभवम्

**अस्ति प्रशस्तः कनकाभिधायाः कश्चित् तटीसोम्नि कवेरजायाः ।**
**श्री वीरनारायणनामधेयः ग्रामः श्रुतिग्रामविदां निवासः ॥ १ ॥**

कनका नामधेयवाली कावेरी नदी के किनारे की सीमा में एक वीरनारायण नाम का सुन्दर ग्राम है, श्रुति समूह के जाननेवाले निवासी जहां पर अधिकता से वास करते हैं ॥ १ ॥

**श्री वीरनारायणनामकृष्णः देवो दयापूरित दृष्टिपातः ।**
**अर्चाकृतिर्यत्र करोति वासं तपःफलं चोलनराधिपस्य ॥ २ ॥**

इस नगर में वीरनारायण नाम के दयापूर्ण दृष्टिपातवाले, अर्चाकृति भगवान् वास करते हैं । जो चोल महाराज के तप का ही फल है ॥ २ ॥

**प्रायो मुरारेर्विरहासहिष्णुः क्षीराम्बुधिस्तस्य निषेवणाय ।**
**सरस्स्वरूपेण विभाति यत्र शुद्धाकृतिः किन्नु जहाति नाथम् ॥ ३ ॥**

भगवान् के वियोग को न सहकर भगवान् के सेवन करने के लिए क्षीर सागर, तालाब का रूप धारण करके इस नगर में मानो रहा करता है । क्योंकि शुद्धस्वरूपवाले पुरुष अपने स्वामी को कभी भी नहीं छोड़ा करते ॥ ३ ॥

**श्रुतिस्मृतिज्ञानविशुद्धवृत्ताः समस्तशास्त्रार्णवकर्णधाराः ।**
**द्विजातयस्तत्र चतुस्सहस्रसंख्यास्सदाचारपरा वसन्ति ॥ ४ ॥**

श्रुति और स्मृतियों के ज्ञान से पवित्र चरित्रवाले, जो कि सारे शास्त्रों में परम प्रवीण हैं और सदाचार में लगे हुए हैं, ऐसे चार हजार ब्राह्मण इस नगर में निवास करते हैं ॥ ४ ॥

**तेषु द्विजेष्वीश्वरभट्टनामा शोट्टैक्कुले प्रादुरभूत् प्रतीते ।**
**श्रुत्यन्तवित् कश्चन विप्रवर्यः नित्यं तपस्यामुदितेन्दिरेशः ।। ५ ।।**

इन ब्राह्मणों में वेदांत का जाननेवाला, अपनी तपस्या से सदा भगवान् को प्रसन्न रखनेवाला, एक ईश्वरभट्ट नाम का ब्राह्मण शोट्टैक्कुल में उत्पन्न हुआ था, जो कुल उन ब्राह्मणों में परम प्रसिद्ध था ।। ५ ।।

**तस्मादभून्नाथमुनिस्स विष्वक्सेनाद्यभृत्येभमुखांशजो यः ।**
**यद्गानविद्याविजितो ह्रियेव विपाण्डुतामाश्नुत नारदोऽपि ।। ६ ।।**

ईश्वरभट्ट के सुपुत्र नाथमुनि जी हुए, जो विष्वक्सेन के पहिले भृत्य गजानन के अंश से उत्पन्न हुए थे । ये गानविद्या में परम चतुर थे, मालूम होता था इनसे पराजित हो लज्जा के मारे नारद सफेद पड़े गए हों ।। ६ ।।

**यो मातृगर्भस्थित एव कृष्णात् अवाप्य संपूर्णकटाक्षवीक्षाम् ।**
**शौण्डस्स्वतस्सर्वकलासु कृष्णम् प्रत्यक्षतां ध्यानवशादनैषीत् ।।**

भगवान् कृष्ण ने उसे माता के गर्भ में ही पूरे कृपाकटाक्ष से देखा था, जिससे वह अपने आप सब कला में कुशल था, तथा अपने ध्यान से उसने भगवान् कृष्ण को प्रत्यक्ष कर लिया था ।। ७ ।।

**अथेश्वराख्यो मुनिराविरासीत् यः पृश्निगर्भांशभवस्स तस्मात् ।**
**अष्टांगयोगानुगतान्तरात्मदृष्टाष्टजाने दृढभक्तिसक्तिः ।। ८ ।।**

नाथमुनि से ईश्वरमुनि नामक एक पुत्र ने जन्म लिया। जो भगवान् विष्णु के अंशावतार थे, जो यम, नियम, आसन, प्राणायाम, प्रत्याहार, ध्यान, धारणा और समाधि, इन आठ अंगवाले योग से अपने अन्तर में कृष्ण भगवान् को दर्शन पाकर उनमें दृढ़ भक्तिमान हो गये थे ।। ८ ।।

तौ नाथयोगीश्वरयोगिवर्यौ विज्ञाप्य कृष्णाय पुरोधिपाय ।
तत्केलिधामौघनिषेवणाय निर्जग्मतुर्भूवलयं स्वपुर्याः ॥ ९ ॥

वे दोनों नाथयोगी और ईश्वरयोगी, उस नगर के स्वामी भगवान् कृष्ण से विनति कर उनकी लीला के धामों के समुदाय का सेवन करने के लिए अपने नगर से भूपरिक्रमा को चल दिये ॥ ९ ॥

यावन्ति धामानि जनार्दनस्य यावन्ति तीर्थान्यपि पावनानि ।
तौ तेषु तेषु त्रिदिनं व्यतीत्य क्रमादुदीचीं दिशमापतुश्च ॥ १० ॥

भगवान् के जितने धाम हैं, तथा जितने भी पवित्र तीर्थ हैं, उन उन सबमें वे दोनों तीन-तीन दिन रहते हुए, क्रम से उत्तर दिशा में पहुंच गये ॥ १० ॥

कलिन्दजारोधसि तौ मुनीन्द्रौ निषेव्य गोवर्धननामपुर्याम् ।
कृष्णं किशोरं यमुनाधिनाथं न्यषीदतां तत्र समर्चयन्तौ ॥ ११ ॥

वे दोनों मुनीन्द्र यमुना के किनारे गोवर्धन नामवाली पुरी में यमुना के अधिनाथ किशोर कृष्ण के दर्शन करके, उनकी सेवा करते हुए, वहीं रहने लगे ॥ ११ ॥

तत्र स्थितो तद्विरहासहिष्णुः श्री वीरनारायणवासुदेवः ।
स्वप्ने समाह्वद् भजतस्स्म तौ हि तत्पार्श्वमूढ्वा यमुनेशमन्तः ॥१२॥

वीरनारायण पुर के रहनेवाले अर्चाकृति भगवान् वीर नारायण कृष्ण इन दोनों के वियोग को न सह सके। गोवर्धन में ही स्वप्न द्वारा कहा कि मैं तुम्हारे वियोग को नहीं सह सकता; तुम वीर-नारायणपुर चले आओ। शीघ्र ही ये दोनों यमुनेश कृष्ण भगवान् को मन में धारण करते हुए, वहां से वीरनारायण पुर पहुंचे ॥ १२ ॥

श्री वैष्णवेभ्यः कुरुकागतेभ्यः शुश्राव सोऽपूर्णसुधाभिधांकम् ।
सहस्रगाथासु परांकुशेन कृतासु गाथादशकं कदाऽपि ॥ १३ ॥

एक समय उसने उधर आये हुए श्री कुरुकापुरी के कतिपय महात्माओं के मुख से, श्रीपरांकुश (श्री शठकोप) सूरी के विरचित सहस्रगीति के अंतर्गत "आरावमुदु" नामक (श्री कुंभघोण नगर के स्वामी भगवान् के विषयक) दस पद्यों को सुना ॥ १३ ॥

**निशम्य गाथादशकं मनोज्ञं स नाथयोगी मुदितोऽवशिष्टाः ।**
**गाथास्तदीयाः श्रवणामृतानि शुश्रूषमाणः कुरुकामयासीत् ॥ १४ ॥**

इन सुन्दर दस गाथाओं को सुनने के बाद नाथयोगी परम प्रसन्न हुए; और इनसे अवशिष्ट जो परांकुश की श्रवणामृत गाथाएं थीं, उनको सुनने की इच्छा से कुरुकापुरी चल दिये ॥ १४ ॥

**निषेव्य भक्त्या कुरुकापुरेशम् स नाथयोगी हरिमादिदेवम् ।**
**विनिद्रचिंचातरुमूलमाप परांकुशं तत्र मुनिं दिदृक्षुः ॥ १५ ॥**

वे नाथयोगी कुरुकापुरी के अधिपति आदिदेव भगवान् को सभक्ति पूजकर परांकुश मुनि के दर्शनार्थं उस इमली के वृक्ष के मूल पहुंचे, जो कभी नींद नही लेता था । यह वृक्ष कुरुकापुरी में ही था ॥ १५ ॥

**योगप्रभावान्न तदा शठारिम् अन्तर्हितं नाथमुनिर्ददर्श ।**
**तदा विषीदन्मनसा न्यषीदत् तद्दर्शनोपायकलां बुभुत्सुः ॥ १६ ॥**

जब योग के प्रभाव से अन्तर्धान हुए श्री शठकोप सूरि को नाथमुनि न देख सके, तब व्यथित हृदय हो, उनके प्रत्यक्ष करने के उपाय जानने की उत्कट अभिलाषा करते हुए वहीं बैठ गये ॥ १६ ॥

**कवीन्दुनोक्तं मधुराभिधेन स तत्र गाथादशकं शठारेः ।**
**सान्निध्यहेतोर्द्विसहस्रयुक्तायुतं तदा वर्तयति स्म वारम् ॥ १७ ॥**

श्री नाथमुनि वहां श्रीशठकोप स्वामी के दर्शन के लिए मधुरकवि की बनाई हुई दस गाथाओं का १२ सहस्र बार जप किया ॥

**प्रोतश्शठारिर्मधुरेण साकम् कवीन्दुनाऽग्रे कृतसन्निधानः ।**
**उपादिशत्स द्वयमन्त्रपूर्वम् सार्थानमुष्मै चतुरः प्रबन्धान् ॥ १८ ॥**

अनुष्ठान की समाप्ति पर शठकोप स्वामी मधुरकवि के साथ नाथमुनि के सामने उपस्थित हुए और नाथयोगी को पहिले ही द्वयमंत्र का आदेश करके पीछे अपने चारों प्रबन्धों का, अर्थसमेत उपदेश दिया ॥ १८ ॥

**चतुर्निगम्यर्थमयान् प्रबन्धान् स द्रामिडानेत्य परांकुशोक्तान् ।**
**सदा तदावर्तनसंप्रदायनिष्णातचेता निषसाद तत्र ॥ १९ ॥**

श्री शठकोप सूरि के उपदिष्ट, चारों वेदों के अर्थ से भरे हुए द्राविड दिव्य प्रबन्धों को पाकर सदा पाठ करने में चित्त लगाकर वे वहीं रहे ॥ १९ ॥

**मया समं तत्मननं कुरुष्व श्री नाथयोगिन्निति सानुकम्पः ।**
**श्री वीरनारायण पुर्यधोशः तमाह्वयत् स्वप्नमुखेन कृष्णः ॥ २० ॥**

वीरनारायण पुर के अधिपति दयालु श्रीकृष्ण भगवान् स्वप्न में श्री नाथयोगी को यों कहते बुलाया कि आप यहीं आकर मेरे साथ उस प्रबन्ध का मनन करें।

**श्री वीरनारायणकृष्णमेत्य स तेन सार्धं मननं वितन्वन् ।**
**अगापयद् गानचणैस्स्वशिष्यैः दिव्येन गानेन सहस्रगाथाः ॥ २१ ॥**

श्री वीरनारायण कृष्ण भगवान् के समीप पहुंच कर उनके साथ प्रबन्धों का मनन करते हुए श्री नाथमुनि, गान विद्या में चतुर अपने शिष्यों के द्वारा सहस्र गाथाओं को दिव्य गान में गवाया ॥ २१ ॥

**चोलक्षितीन्दुस्सुरगानशौण्डाम् कांचित् स्त्रियं गानपटुं विधाय ।**
**परीक्षितुं द्राग् भरतागमज्ञैः प्राज्ञैः समं नाथमुनीन्द्रमाह्वत् ॥ २२ ॥**

चोल महाराजा ने एक स्त्री को देवीगान में तैयार कराया था और उसकी परीक्षा करने के लिए अन्य चतुर गानकला विशारदों के साथ नाथमुनि को भी बुलाया ।। २२ ।।

**सर्वेऽपि लोका स्स्वरगानयुक्तं न विन्दते द्रामिडगानतत्वम् ।**
**प्रकाशयामीति पुरो नृपस्य समीपमापत्स मुनिस्सशिष्यः ।। २३ ।।**

सभी जनता स्वर गान से युक्त द्रविड भाषा के गान को नहीं जानती, इस कारण मैं राजा के सामने इस गानतत्व को प्रकट करूंगा, यह सोच कर अपने शिष्यों समेत चोल महाराज के दरबार में नाथयोगी चले आये ।। २३ ।।

**सभाजनं प्राप्य सभामुपेतः सभाजनानां पुरतो निदेशात् ।**
**स भाजनं सर्वकलावलीनां भद्रासने नाथमुनिर्न्यवात्सीत् ।। २४ ।।**

पहुंचते ही राजा ने इनकी पूजा की। पीछे ये राजा की प्रार्थना से सब सभासदों के सामने भद्रासन पर विराजे। क्योंकि ये सब कलाओं के पूर्णरूप से ज्ञाता थे ।। २४ ।।

**इमे सुमध्ये कलहायमाने श्रुत्वाऽनयोर्गानकलाविवादम् ।**
**निरूप्य सम्यङ् निगदेदमित्थम् इत्याबभाषे नृपतिर्मुनीन्द्रम् ।। २५ ।।**

राजा ने श्री नाथयोगी से कहा कि ये दोनों स्त्रियां आपस में विवाद कर रहीं हैं; आप इनकी गानकला की ठीक परीक्षा करके और शास्त्रानुसार विवेचन करके बताइए कि इनमें से कौनसी श्रेष्ठ है ।। २५ ।।

**तथेति गानं स तयोः परीक्ष्य जगाद कस्याश्चिदुदेति गीतिः ।**
**मया भवद्भिश्च परं सुबोधा मयाऽपि देवैरपि चापरस्याः ।। २६ ।।**

श्री नाथयोगी ने राजा से तथास्तु कहकर उनकी परीक्षा करके कहा कि इस स्त्रीके गान को हम व तुम सभी समझ सकते हैं; और

इस दूसरी स्त्री के गान को तो, मात्र देव और हम समझ सकते हैं (न तु साधारण दूसरे मानव) ॥ २६ ॥

**ततो मरुन्मानव गानभेद ज्ञानोत्थ सामाजिक संशयार्थम् ।**
**नादेन नानालयतालमात्राम् आहैकदा सोऽनणुमात्रशून्यम् ॥ २७ ॥**

उसके उपरान्त देव गान और मनुष्य गान के भेद के बारे में सभासदों का संशय होने पर, नाथमुनि स्वामी जी ने नादमात्र के श्रवण से विभिन्न लय व ताल के प्रकाशों का वर्णन किया, जिसमें रत्ति भर की भी भूल नहीं हुई ॥ २७ ॥

**राजाऽपि सामाजिकमण्डलेन साकं तदंघ्रचोः प्राणनाम हृष्टः ।**
**संभावनां संप्रतिगृह्य तस्मात् श्री वीरनारायणमाप भूयः ॥२८॥**

राजा ने भी प्रसन्न होकर अपने सभ्यों के साथ नाथयोगी के चरणों में साष्टांग प्रणाम किया । फिर नाथमुनि राजा से भेंट पूजा लेकर वीरनारायणपुर चले आये ॥ २८ ॥

**जातो जयत्सेनविपश्चितोंशः श्रीपुण्डरीकाक्ष इति द्विजेन्द्रः ।**
**कालाधिपांशः कुरुकाधिपश्च तौ च्छात्रतां नाथमुनेरवाप्तौ ॥ २९ ॥**

जयत्सेन सूरि के अंश से उत्पन्न हुए द्विजवर्य पुण्डरीकाक्ष, तथा कालाधिप नामक सूरी के अंश से अवतीर्ण कुरुकाधीश, ये दोनों नाथमुनि के शिष्य हुए ॥ २९ ॥

**श्री पुण्डरीकाक्षमुखान् मुनीन्द्रः छात्रानशेषान् सह गानभङ्ग्या ।**
**अजीग्रहद् द्रामिडवेदगाथाः स न्यायतत्वं स्वकृतिं च भूयः ॥ ३० ॥**

श्री नाथमुनि स्वामीजी ने श्री पुण्डरीकाक्ष आदि अपने सभी शिष्यों को गानक्रमयुत दिव्यप्रवंध को तथा अपने विरचित न्यायतत्व नामक ग्रंथ को सिखाया ॥ ३० ॥

**अथागमच्चोलपतिर्दिदृक्षुः श्रीराजनारायणवासुदेवम् ।**
**तदाकृतिध्यानसमाधिनिष्ठं विसृष्टनानाविषयं मुनिं च ॥ ३१ ॥**

एक दिन चोल महाराजा, नारायण कृष्ण भगवान् और उनके ध्यान की समाधि में निमग्न, तथा विषय वासनाओं से विमुक्त नाथमुनि के दर्शन करने की इच्छा से (वीरनारायणपुर) आये ॥ ३१ ॥

**निषेव्य कृष्णं स्वपुरं प्रयातं सहावरोधैं नृपतिं विभाव्य ।**
**साक्षाद् व्रजस्त्रीसहितं मुकुन्दमातत्पुरं नाथमुनिर्जगाम ॥ ३२॥**

भगवान् कृष्ण के दर्शन करके रानियों समेत जाते हुए राजा को देखकर श्री नाथमुनि स्वामीजी उन्हें व्रज वनिताओं के युत साक्षात् कृष्ण ही मानकर, (योगावेश में) उनके नगर तक पीछे-पीछे ही चलने लगे ॥ ३२ ॥

**स पुण्डरीकेक्षणमुख्यशिष्यगणाय पृष्टागमनक्रमाय ।**
**यथावदुक्त्वाऽनुगताय भूयः श्री वीरनारायणपार्श्वमागात् ॥ ३३ ॥**

श्री पुंडरीकाक्षादि शिष्यगण पूछने लगे कि आप क्यों और कहां चल रहे हैं । श्री नाथमुनि स्वामीजी उन्हें सत्य वृत्तांत बताकर श्री वीरनारायण भगवान् के पास आ गये ॥ ३३ ॥

**भूयोऽपि तं कृष्णमुपास्य भूपं सोऽमुह्यदारूढगजं विभाव्य ।**
**सामन्तमौलौ चरणं निवेश्य ब्रह्मादिमौलौ हरिमात्ततार्क्ष्यम् ॥ ३४ ॥**

फिर उन्होंने देखा कि उन भगवान् कृष्ण की उपासना करके राजा अपने प्रधान सामन्तक के सिर पर पैर रखकर हाथी पर बैठा है । जिसे यों मानकर कि, भगवान् ब्रह्मादि देवों के सिर पर पैर रखकर गरुड़ पर सवार हो रहे हैं, (आनंद के मारे) वे मोहित हुए ॥

**स पुण्डरीकेक्षणमादिदेश शास्त्रार्थवृत्त्या प्रथयस्व तत्वम् ।**
**समाधिनिष्ठो वरयोगभंग्या पश्येति तत्वं कुरुकाधिपं च ॥ ३५ ॥**

श्री नाथमुनि ने अपने शिष्य पुण्डरीकाक्ष को आज्ञा दी कि शास्त्रार्थ की रीति से तत्व का विस्तार करो। और कुरुकाधिपति से कहा कि योगमार्ग का अवलंबन करके समाधिनिष्ठ होकर तत्व का साक्षात्कार करो ।। ३५ ।।

**पुरा भवत्युल्बणधीभरत्वात् सिंहासनांशस्तनयो महात्मा ।**
**तं यामुनेयं रचयेति नाम्ना स नाथयोगी स्वसुतं जगाद ।। ३६ ।।**

नाथमुनि स्वामीजी ने अपने पुत्र को आज्ञा दी कि भगवान् के सिंहासन के अंश से अत्युज्वल बुद्धिसंपन्न एक महात्मा (तेरे) पुत्र के रूप में शीघ्र ही प्रकट होगा, जिसको तू 'यामुन' करके नाम रख ।।

**श्रुत्यर्थजातैर्द्वयमन्त्रतत्वयोगैश्च सद्राविडवेदगानम् ।**
**श्री पुण्डरीकाक्षमुखान् स शिष्यान् न्ययुंक्त पौत्रस्य तदोपदेष्टुम् ।।**

श्री नाथमुनि ने पुण्डरीकाक्ष आदि अपने शिष्यों को आदेश दिया कि तुम लोग मेरे पौत्र को वेदों का तथा द्वय मंत्र, मंत्रार्थ, योग, द्राविड वेदगान आदि का उपदेश करो ।। ३७ ।।

**कृतार्थ एवं कृतकृत्यशेषः बभूव योगान्तसमाधिनिष्ठः ।**
**अवाप्तुकामो निभृतान्तरात्मा सनातनं ब्रह्म स नाथयोगी ।। ३८ ।।**

इस प्रकार अपने सभी कर्तव्यों के पालन से कृतार्थ बने हुए नाथमुनि स्वामो सनातन ब्रह्म को प्राप्त करने के लिए अपनी इन्द्रियों को रोककर योग के अन्तिम समाधि में निष्ठ हो गए ।। ३८ ।।

**शिष्येषु नाथाख्यमुनीश्वरस्य समाधिनिष्ठे कुरुकेशताते ।**
**तदन्यसच्छात्रयुतस्ततान स पुण्डरीकाक्षसुधीरधीतम् ।। ३९ ।।**

नाथमुनि के शिष्यों में कुरुकेश भी अचल समाधिस्थ हुए; अब पुण्डरीकाक्ष ने अच्छे-अच्छे छात्रों में अपने अधीत अर्थों का प्रचार किया ।। ३९ ।।

**श्री राममिश्रः कुमुदाक्षसूरेः अंशाद् यमुर्व्यामवतीर्णमाहुः ।**
**स पुण्डरीकाक्षमनीषिणोऽभूत् शिष्याग्रणीर्दर्शितशिष्यभक्तिः ॥४०॥**

कुमुदाक्ष सूरि के अंश से भूमण्डल पर अवतीर्ण परम बुद्धिमान श्री राममिश्र, पुण्डरीकाक्ष मुनि के शिष्यों में प्रधान तथा परम गुरुभक्त थे ॥ ४० ॥

**शुश्रूषया प्रीतमनास्स तस्मै गुरूपदिष्टं परमार्थजातम् ।**
**द्वयेन सत्रा मनुनोपदिश्य पुनर्वचो विश्वजनीनमाख्यत् ॥ ४१ ॥**

श्री राममिश्र ने अपने गुरु श्री पुण्डरीकाक्ष की यथेष्ट सेवा शुश्रूषा की, जिससे मुनि ने प्रसन्न होकर परमार्थ तत्वों का द्वय मंत्र के साथ उपदेश करके संसार के हित करनेवाला वचन कहा ॥ ४१ ॥

**मयोपदिष्टान् हरिदर्शनार्थान् कृतानुरोधोऽप्यनुशाधि गूढम् ।**
**त्वं भाविनं नाथमुनिन्द्रपौत्रम् श्री यामुनेयं सुतमीश्वरस्य ॥४२॥**

हमने जो श्री वैष्णव सिद्धांत के रहस्यार्थों का उपदेश दिया, उनका, तू नाथ मुनीन्द्र के पौत्र तथा ईश्वर मुनी के पुत्र श्रीं यामुनेय को, जिनका अवतार थोडे समय पर होगा, उपदेश कर; और एतदर्थ यदि उनकी सेवा भी करनी हो, तो अवश्य कर ॥ ४२ ॥

**श्री राममिश्र स्स वचस्तथेति निशम्य तद्दुष्करमेव मत्वा ।**
**चिन्ताकुलो व्याकृतदर्शनार्थः श्री यामुनेयोदयलिप्सुरास्त ॥ ४३ ॥**

श्री राममिश्र पुण्डरीकाक्ष के वाक्यों को स्वीकार करके, इस कार्य को कठिन जानकर चिन्ताकुल हो गये; और श्री यामुनेय के अवतार की प्रतीक्षा करते हुए, दर्शनार्थ का प्रचार करने लगे ॥ ४३ ॥

**अयेश्वरात् सिंहमुखांशभूतः श्री यामुनेयस्तनयोऽजनिष्ट ।**
**निर्वृत्तचौलो विधिनोपनीतः प्रारब्ध सोऽध्येतु मकृत्रिमोक्तीः ॥४४॥**

इसके बाद सिंहमुख-सूरि के अंश से नाथमुनि के पुत्र ईश्वर के घर, श्री यामुनेय ने जन्म लिया; यथासमय इनका चूडा संस्कार और सविधि उपनयन करने में आया; फिर श्री यामुनेय ने वेद पढ़ना प्रारम्भ किया ॥ ४४ ॥

**धिया सकृद्ग्राहचणे स्वपित्रा न किं गतोऽध्येतुमसीति पृष्टः ।**
**आचष्ट सोऽपीति कथं व्रजेयं पूर्वेद्युरुक्तं गुरुरद्य वक्ति ॥ ४५ ॥**

श्री यामुनेय की बुद्धि कुशाग्र थी; एक ही बार कहने से इन्हें याद हो जाया करता था। एक दिन ये पढ़ने न गये, तब इनके पिता ने पूछा कि आज पढने क्यों नहीं गया? तब श्री यामुनेय ने उत्तर दिया कि मैं कैसे पढ़ने जाऊं; गुरु ने कल जो पढ़ाया था, वही आज पढ़ा रहे हैं, तो जाकर क्या करूं? ॥ ४५ ॥

**एवं समस्तान्निगमा नधीत्य सलक्षणं शास्त्रपथाऽवतीर्णः ।**
**ततः कृतोद्वाहविधिर्न्यषीदत् पठन्महाभाष्यगुरो स्सकाशे ॥ ४६ ॥**

श्री यामुनेय तो इस प्रकार सब वेदों को लक्षणों के साथ पढ़कर शास्त्र मार्ग में अवतीर्ण हुए। माने, शास्त्र पढने लगे। पीछे विवाह होने पर श्रीमहाभाष्य गुरु के यहां पढ़ते वर्तमान रहे ॥ ४६ ॥

**तदाऽऽक्कियाल्वानभिध स्सुधीन्द्रः पुरोहित श्चोलधराधिपस्य ।**
**विद्वज्जनद्रव्य दशांशहारी स प्राहिणोद् भाष्यगुरोर्निदेशम् ॥ ४७ ॥**

उस समय चोल महाराज के आक्कियालवान् नामक एक पुरोहित अच्छे विद्वान थे; वे विद्वानों से उनके आय के दशमांश को कर के रूप में लेते थे; उन्होंने महाभाष्य गुरु को भी (कर देने का) आदेश भेजा ॥ ४७ ॥

**स यामुनेयो गुरुखेद हेतुं समीक्ष्य तच्छासनमात्तरोषः ।**
**छित्वा तदाहर्तृकरे विलिख्य वादार्थमेवं प्रजिघाय पत्रम् ॥ ४८ ॥**

श्री यामुनेय जी ने गुरु के खेद के कारण, उस पत्र को क्रोध से फाड़कर फेंक दिया और उसी पत्रवाहक के हाथ बाद के लिए पत्र लिख करके भेजा ॥ ४८ ॥

न केवलं सत्कवयो वयं स्मः न केवलं तन्त्रतटं प्रयाताः ।
किन्तु प्रतिद्वन्द्वकरीन्द्रगर्व सर्वस्वनिर्वापण पंचवक्त्राः ॥ ४९ ॥

श्री यामुनेय जी ने पत्र में लिखा था कि हम केवल कविमात्र नहीं हैं, अथवा शास्त्र मात्र जाननेवाले नहीं; किन्तु प्रतिवादिरूपी हाथी के गर्व सर्वस्व को मरदन करनेवाले सिंह हैं ॥ ४९ ॥

पुरोहितस्तत्र विलोक्य पत्रं विज्ञापितोदन्तसविस्मयस्य ।
राज्ञो निदेशात्सह देशिकेन श्री यामुनेयं गुरुमानिनाय ॥ ५० ॥

पुरोहित ने चिट्ठी देखकर राजा को दिखायी, जिसे देखते ही राजा को बड़ा आश्चर्य हुआ, पीछे पुरोहित ने राजा की आज्ञा से भाष्य गुरु के साथ श्री यामुनेय को निमंत्रित किया ॥ ५० ॥

आकालिकाकान्तनिवासशैलात् आजानकीजानिकृताच्च सेतोः ।
आशैलयुग्मादरुणेन्दुचूडात् मीमांसको मत्सदृशोऽस्ति नान्यः ॥ ५१ ॥

कालिका के पति शिव की निवास भूमि जो कैलास है, वहां से जानकी के पति राम के बनाये हुए सेतु तक, और उदयाचल से लेकर अस्ताचल तक मेरे समान कोई भी मीमांसक नहीं है ॥ ५१ ॥

इति स्फुटार्थं विनिबध्य पत्रं महीपतेर्द्वारि पुरोहितेन ।
तर्कं विधित्सु स्स सभामुपेत्य प्राप्तार्हणो भूपतिमित्युवाच ॥ ५२ ॥

इस प्रकार एक पत्र लिखकर राजा के द्वार पर बांध दिया और तर्क (वादविवाद) करने की इच्छा से राजसभा में आये। राजा ने उनका खूब आदर सत्कार किया। पीछे वे राजा से कहने लगे ॥ ५२ ॥

**अस्माक (मारिप्सित) मारब्धित वादविध्योः परीक्षणार्थं भवता महीन्द्र ।**
**आकारणीया स्सहसा प्रवाचः विपश्चितो निश्चितशास्त्रतत्वाः ॥ ५३ ॥**

हे राजन्! हम दोनों के शास्त्रार्थ की परीक्षा के लिए ऐसे विद्वानों को बुलाओ, जो सब शास्त्रों के तत्व के जाननेवाले तथा तर्क के वेत्ता हो ॥ ५३ ॥

**तथेति सर्वानपि लब्धवर्णान् आहूय चोलक्षितिपः सभायाम् ।**
**देव्या सहाधिष्ठितभद्रपीठः प्रवर्तयामासतुतयोर्विवादम् ॥ ५४ ॥**

राजा ने वात को मानकर और भी प्रतिष्ठित विद्वानों को सभा में बुलाया, एवं महिषी के साथ भद्रासन पर बैठकर दोनों का शास्त्रार्थ प्रारम्भ करा दिया ॥ ५४ ॥

**यावन् न तौ वादपरावभूताम् देवौ च तावत् पणमित्यकार्ष्टम् ।**
**स यामुनेयस्य वचोजितश्चेत् पुरोहितोऽर्धं विषयं प्रदद्याम् ॥ ५५ ॥**

जब तक शास्त्रार्थ का प्रारम्भ नहीं हुआ था, उस समय राजा और रानी ने यह प्रतिज्ञा की थी, जो यामुनेय हमारे पुरोहित को परास्त कर देगा, तो हम उसे आधा राज्य देंगे ॥ ५५ ॥

**अस्तित्व नास्तित्व पदे त्वदुक्ते छिन्द्यां गिरा लौकिकवैदिकार्थम् ।**
**न चेच्छिरः पादुकया जहीति पुरोहितोऽभाषत यामुनेयम् ॥ ५६ ॥**

वालक यामुनाचार्य से पुरोहित ने कहा कि लौकिक तथा वैदिक विषयों में तुम जिसको 'है' ऐसा कहो तथा 'नहीं है' ऐसा कहो, उसका में खण्डन करूंगा; यदि न कर सकूं, तो भले ही तुम मेरे शिर को पादत्राण से मारो ॥ ५६ ॥

**तथेति वृद्धं विहितप्रतिज्ञं स लौकिकन्यायविदाह बालः ।**
**अत्रोत्तरं देहि जनन्यवन्ध्या तवेति राजाऽपि च सार्वभौमः ॥ ५७ ॥**

इस प्रकार प्रतिज्ञा किये हुए वृद्ध राज पुरोहित से लौकिक न्याय के जाननेवाले बालक यामुनाचार्य ने कहा कि मेरी दो प्रतिज्ञा हैं, पहिली तो आपकी जननी अवन्ध्या है; तथा दूसरी राजा सार्वभौम है, यह है। इनका आप खण्डन करें ।। ५७ ।।

**अशक्नुवन्नुत्तर मत्र दातुं सोऽवाङ्मुखो भूमिपतेः पुरोधाः ।**
**अद्वैतवादी श्रितभेदवादं शास्त्रीयमालम्ब्य जगाद वादम् ।। ५८ ।।**

राजा का पुरोहित इन लौकिक वाक्यों का कोई उत्तर न दे सका; अत एव इसने लज्जा के मारे अपना सिर नीचे कर लिया। लौकिक विषय में हार हो जाने पर इसका वैदिक विषय ही बाकी रहा। यह था अद्वैतवादी; इस कारण भेदवाद से संवन्ध रखने वाले शास्त्रीय वाद आरम्भ किया ।। ५८ ।।

**मिथ्या प्रपंचोऽयममुष्य शुक्तिदुर्वर्णवद् दृश्यतया स चाख्यत् ।**
**एतन्न सम्यग्यदयं प्रपंचः मिथ्या तदन्तस्थतया तथा सा ।। ५९ ।।**

पुरोहित ने कहा कि यह प्रपंच तो वास्तव में मिथ्या है, और सींप के चांदी की भाँति मात्र दिखावट है। श्री यामुनेय ने उत्तर दिया कि यह वाद ठीक नहीं है, चूँकि जो यह प्रपंच मिथ्या हो, तो इसके अंतर्गत वह मिथ्या भी मिथ्या ही होगी ।। ५९ ।।

**त्वया प्रपंचस्य तदद्य मिथ्या मिथ्यात्वमेव प्रतिपादितं स्यात् ।**
**किंनाम मिथ्यात्वमिह त्वदुक्तं पुरः प्रसिद्धार्थकदम्बकस्य ।। ६० ।।**

तब प्रपंच का मिथ्यात्व भी मिथ्या ही हो जायगा। अच्छा अब बताइये कि आप जो बार-बार मिथ्या-मिथ्या चिल्ला रहे हैं, यह मिथ्यात्व किसको कहते हैं। हमारे समक्ष दिखनेवाले इन सभी पदार्थों का मिथ्यात्व कैसे माना जाता हैं? ।। ६० ।।

**प्रतीयमानेतरता किमु स्यात् उत स्वतस्संविद गोचरत्वम् ।**
**तद्रूप बुद्धिः किमु तत्स्वरूपे तस्मिन्नतद्बुद्धि रुताद्य इष्टः ।। ६१ ।।**

१. क्या प्रतीयमान से भिन्न होने को मिथ्यात्व कहते हैं? या

२. संविद् के अविषयपने को मिथ्यात्व कहते हैं।

३. अथवा क्या सत्यवस्तु की समान होने की बुद्धि है?

४. अथवा जिसमें जिसका रूप हो उसमें उसके रूप का रंग न होने का नाम मिथ्यात्व है? इनमें से आपको कौनसा पक्ष इष्ट है? क्या पहिला है? ॥ ६१ ॥

**नेष्टं द्वयं चात्र हि तत्व संविदगोचरत्वे इति चेदिदं च।**
**यतः प्रपंचस्य च गोचरत्वं न स्यादतस्तावदसांप्रतं स्यात् ॥ ६२ ॥**

पहिले के दो पक्ष तो अयुक्त हैं, चूंकि यदि तत्वज्ञान का गोचर न होना ही मिथ्यात्व हो, तो इस प्रपंच का ज्ञान गोचर नहीं होना था। (परंतु यह गोचर है; और अत एव मिथ्या नहीं हो सकता।) ॥ ६२ ॥

**खण्डत्वमुण्डत्वगुणौ च पूर्णश्रृंगत्वमप्येकगवे कथं स्यात्।**
**मया जितो लौकिक वैदिकार्थन्यायेन मध्येसभमुक्तिभङ्ग्या ॥ ६३ ॥**

पर तीसरा चौथा भी ठीक नहीं है। क्योंकि एक ही गोव्यक्ति खंड, मुंड और पूर्णश्रृंग कभी न हो सकती है। इस प्रकार हमने लौकिक और वैदिक अर्थों में, सभा के वीच अपनी वाणी द्वारा तुम्हें पराजित किया ॥ ६३ ॥

**नोपानहा वृद्धतया हतस्त्वं तर्केण किन्तु प्रहतोऽधिगल्पम्।**
**सभासदो वीक्ष्य तदा तमेवम् विधूत पौरोधसयुक्तिजातम् ॥ ६४ ॥**

इस प्रकार पुरोहित की युक्तियों को काट डालनेवाले उन्हें देखकर सभासदों ने पुरोहित से कहा कि, वृद्ध होने के कारण तुम पादुका से मारा नहीं गया, किन्तु तर्क से हार ही गये। (वृद्ध होने से हम तुमको जूते से नहीं मारेंगे; तथापि आप वाद में हार ही गये। इस प्रकार सभासदों ने देखा कि पुरोहित की सभी युक्तियाँ काट डाली गयीं।) ॥ ६४ ॥

**अनन्तरं साध्विति साऽऽलिलिंग मां त्रातुमायात इहेति राज्ञी ।**
**श्रुत्वा स भूपो मुदितस्तदुक्तं पुरोधसं शिष्यममुष्य कृत्वा ॥ ६५ ॥**

रानी ने यों कहती हुई विजयी बालक का आलिंगन किया कि यह तो मुझे तारने आया है। (अर्थात् यदि यामुनेय हार जाते, तो रानी को छः मास दासी बनना पडता; अब वह उस आपत्ति से बच गयी।) राजा ने भी परम प्रसन्न होकर अपने पुरोहित को बाल यामुनेयाचार्य का शिष्य करा दिया ॥ ६५ ॥

**अस्मै विभज्याथ दिदेश देशम् आदेशतोऽर्धं निजवल्लभायाः ।**
**महीभुजा दत्तमवाप्य राज्यं प्राज्योदयं स्वीकृतराज्यभोगम् ॥ ६६ ॥**

रानी ने महाराज से कहा कि अपनी प्रतिज्ञा के अनुसार अपना आधा राज विजयी बालक को दीजिये; राजा ने रानी के कथनानुसार अपना आधा राज्य विजयी बालक को दिया; तथा श्री यामुनाचार्य भी राजैश्वर्य का भोग करने लग गये ॥ ६६ ॥

**तं राममिश्रोऽभ्यगमद् विनेतुं स्वचित्तखेलत्परमार्थ दानात् ।**
**अशक्नुवन् दर्शनमस्य लब्धुं तद्दर्शनज्ञानकला निदानम् ॥ ६७ ॥**

श्री राममिश्र अपने हृदय में अठखेलियां करनेवाले परमार्थ के दान से श्री यामुनेय को सुशिक्षित करने के लिए वहां पहुंचे, पर ये श्री यामुनेय के दर्शन भी न पा सके, जिससे उनको उनके दर्शन का उपाय की चिंता होनी लगी ॥ ६७ ॥

**अलर्कपत्रं तदभीष्टमाषण्मासं करे प्रादित पाचकस्य ।**
**विलोकनं दैववशान्न तस्य यत्नेन चापं महतेति खिन्नः ॥ ६८ ॥**

श्री राममिश्र छः मास तक यामुनेय के अभीष्ट अलर्क पत्र का साग रोज उनके रसोइये के हाथ देते रहे; पर दैववश एक दिन भी इनके दर्शन नहीं मिले। इससे ये बहुत खिन्न हुए ॥ ६८ ॥

**यत्राह्नि नादिक्षदलर्कपत्रम् तस्मिन् स पौरोगव मित्युवाच ।**
**नास्मिन् दिने दत्त मलर्क पत्रम् त्वया कथं वाऽस्यवहारहेतोः ॥६९॥**

(इस खेद से) जिस दिन श्रीराम मिश्र ने अलर्क पत्र नहीं दिया, उसी दिन श्री यामुन ने रसोइया से पूछा कि आज क्यों भेजन में अलर्क पत्र नहीं दिया गया ॥ ६९ ॥

**कोऽदादितः पूर्वमिति ब्रुवाणं पौरेगवोऽभाषत यामुनेयम् ।**
**आमासषट्कं स्थविरोऽग्रजन्मा दिने दिने कश्चिदलर्कपत्रम् ॥ ७० ॥**

श्री यामुनेय ने रसोइया से पूछा कि इतने दिन कौन तुम्हें अलर्क पत्र दिया करता था; इसके उत्तर में पाचक ने कहा कि एक बूढ़ा ब्राह्मण मुझे अलर्क पत्र दिया करता था; छः मास तक मुझे रोज अलर्क पत्र दिया था ॥ ७० ॥

**प्रादाद् भवद्दर्शनवाञ्छया सः किमद्य नादादिति तन्न जाने ।**
**निशम्य तस्येति वचो जगाद श्वस्तं द्विजं मेऽन्तिकमानयस्व ॥ ७१ ॥**

देने का और कोई उद्देश्य उसने नहीं कहा, केवल आपके दर्शनों के लिए ही दिया करता था; किंतु मालूम नहीं आज क्यों नहीं लाया? यह सुनकर श्री यामुनेय बोले कि कल उस ब्राह्मण को अवश्य ही मेरे पास लाना ॥ ७१ ॥

**इतीरित स्सूपकृदप्यनैषीत् श्री राममिश्रार्य ममुष्य पार्श्वम् ।**
**तं यामुनेयो निजगाद नित्यं पत्रं त्वमालर्कमदाः किमर्थम् ॥ ७२ ॥**

दूसरे दिन रसोइया भी श्री राममिश्र स्वामी को यामुनेय के पास ले आया। यामुनेय ने देखते ही पूछा कि आप रोज मेरे यहां अलर्क पत्र किसलिए भेजा करते थे ॥ ७२ ॥

**क्षेत्रेषु किं ते फलवत्सु कामः धनेषु वाञ्छा किमु तादृशेषु ।**
**तेनेति पृष्ट स्स तमाबभाषे क्षेत्रेषु चार्थेषु न मेऽभिलाषः ॥ ७३ ॥**

क्या आपकी इच्छा उपजाऊ खेत की है? अथवा धन की वांछा है? अथवा ऐसी ही दूसरी किसी वस्तु की है? इस प्रकार पूछने पर राममिश्र ने कहा कि न तो खेत की मुझे इच्छा है और न धन की अभिलाषा है ॥ ७३ ॥

न्यस्तो निगूढं भवदीयपूर्वैः निधिर्मयि स्थास्यति तं गृहाण ।
इतीरितस्तेन स तं बभाण किं वा मया तस्य कृते विधेयम् ॥ ७४ ॥

आपके पूर्वजों ने मेरे पास कुछ गुप्त निधि रख दी थी; उसे आप लें लें। यह सुनकर यामुनेय बोले, उसके लिए मुझे क्या करना पड़ेगा ॥ ७४ ॥

स आह वस्तुं घटिका श्चतस्रः त्वयाऽन्वहं द्वाः क्रियतामरोधा ।
अपोढ़दौवारिकरोधकृत्यः प्राचष्ट सोऽष्टादश वासरेऽस्मै ॥ ७५ ॥

श्री राममिश्रजी ने कहा कि मैं रोज आपके साथ चार घटी रहना चाहता हूँ। मेरे लिए रुकावट न हो ॥ ७५ ॥

श्री कृष्ण गीतोपनिषद् विराजदष्टादशाध्याय समर्थितार्थम् ।
आकर्ण्य तस्मान्मुदितस्तमर्थम् आर्तो विरक्तश्च दिने दिने सः ॥

इस प्रकार अबाध रूप से श्रीराम मिश्र आकर भगवान् कृष्ण के मुँह से कही हुई गीतोपनिषद् के अठारह अध्यायों के अर्थ उन्हें बताया। जिसे सुनकर यामुनेय बहुत प्रसन्न हुए और दिन पर दिन विरक्त एवं भगवान् से मिलने के लिए त्वरावान हुए ॥ ७६ ॥

कृष्णं तमासादितुमभ्युपायः को वेति तं कौतुकवानपृच्छत् ।
तेनेति पृष्टः परमोऽभ्युपायः तदर्थसाक्षात्करणैकहेतुः ॥ ७७ ॥

उन श्री कृष्ण को पाने का क्या उपाय है? यह यामुनेय ने कौतुक के साथ श्री राममिश्र से पूछा; तब श्री राममिश्र ने कहा कि "अवश्य ही उसका एक उपाय......॥ ७७ ॥

अस्तीति तस्मै विजने जगाद श्लोकस्य सोऽ चरमस्यर्थं गूढम् ।
तत स्समाकर्ण्य विरक्तिभाजा निरस्त संसाररसादरेण ।। ७८ ।।

है ।" ऐसा कहकर श्री राममिश्र ने एकान्त में गीता के अठारहवें अध्याय के अन्तिम श्लोक का गूढ़ अर्थ यामुनेय को बताया, जिसे सुनकर इनका वैराग्य और बढ़ा तथा इनके हृदय से संसार के रसों का आदर जाता रहा ।। ७८ ।।

स यामुनेयेन समं महत्मा समासदद् रंगपुरं गरीयः ।
ते शेवधिं वो जगदेककन्दं रंगेन्दुमुद्दामदयाम्बुराशिम् ।। ७९ ।।

श्री महात्मा राममिश्र जी यामुनाचार्य के साथ श्री महान रंगपुर को आये । यहां आने पर श्री राममिश्र ने दिखाया कि देखो यह खजाना है, यही जगत का मूल है ; यही खजाना है ; ये भगवान् रंगनाथ प्रभूत दया का अटूट समूह हैं ।। ७९ ।।

प्रादर्शयत्तं भवदीयपूर्वैः समार्जितोऽयं निधिरित्यमुष्मै ।
अर्थं रमामुद्रितमाप्तुमेतं इदं प्रयोज्यानन पत्रभावम् ।। ८० ।।

यह निधि है जिसे तुम्हारे पूर्वजों ने संपादन किया है । मैंने इसे तुम्हारे लिए बड़े ही यत्न से सुरक्षित रखा है । रमा की मुद्रा से मुद्रित हुए इस अर्थ को पाने के लिए निर्लिप्त होकर शरणागति का प्रयोग करना चाहिये ।। ८० ।।

इत्याननतायोपदिदेश तस्मै श्री राममिश्रो द्वयमंत्ररत्नम् ।
साक्षात्कृतिं जग्मुषि रंगराजे स यामुनेयो द्वयमंत्रलाभात् ।। ८१ ।।

ऐसा कह कर विनम्र यामुनेय को श्री राममिश्र ने द्वय मंत्र का उपदेश दिया । द्वय मंत्र के लाभ से श्री यामुनेय ने श्री रंगनाथ को प्रत्यक्ष कर लिया ।। ८१ ।।

आनन्द बाष्पाविललोचन स्तम् आपादचूडं हृदयेऽन्वभुङ्क्त ।
श्रीरंगराजानुभवात्त्रिदण्डि भावेन संन्यास्यदपास्य रागम् ।। ८२ ।।

श्री यामुनेय के नेत्र आंनन्द के आसुओं से आकुल हो गये और अपने हृदय में भगवान् रंगराज का आपाद चूड (माने सिर से पैर तक) अनुभव कर लिया।

इस प्रकार रंगनाथ के दर्शन हो जाने पर इनका रहा सहा राग भी जाता रहा और ये त्रिदण्डी सन्यासी हुए ।। ८२ ।।

**अर्थस्य लाभे सति शाश्वतस्य किं नश्वरं वस्तु भजन्ति सन्तः ।**
**स संविदात्मेश्वरसिद्धिवेदप्रमाण्य मास्तोत्र युजोऽष्ट चक्रे ।**
**गोतार्थसंक्षेपण पूरुषार्थ निरूपणस्तोत्रमणीन् प्रबन्धान् ।। ८३ ।।**

शाश्वत पदार्थ के मिल जाने पर महात्मा लौकिक वस्तु को नहीं चाहते। (इस न्याय के अनुसार श्री यामुनेय क्षुद्र लौकिक पदार्थों में विरक्त हो सन्यासो वने) इसके बाद उन्होंने संवित् सिद्धि, आत्म सिद्धि, ईश्वर सिद्धि, आगमप्रामाण्य, श्री स्तोत्ररत्न, चतुःश्लोकी, गीतार्थ संग्रह, पुरुषनिर्णय इन आठ प्रवन्धों का निर्माण किया ।। ८३ ।।

**अंशा बभूवुः कुमुदाक्षशंकुकर्णाहिनेत्रोज्वल वामनानाम् ।**
**श्री यामुनेयस्य च तस्य शिष्याः भवाब्धि मग्नोद्धरणप्रवीणाः ।।८४।।**

श्री कुमुदाक्ष सूरि, शूंकु कर्ण सूरि, सर्प नेत्र सूरि, और वामन सूरि, इनके अंश से उत्पन्न महात्मा भगवान यामुनेय के शिष्य हुए; जो सब भवसागर में डूबे हुए जीवों के उद्धार करने में अत्यन्त ही प्रवीण हुए ।। ८४ ।।

**एषां महापूर्ण मनीषिरंङ्गिकुशीलवाधीश्वर काञ्चिपूर्णाः ।**
**श्री माल्यभृद् गोष्ठिपुरेशपूर्णाः इति क्षितौ ख्यातिमवापु रार्याः ।।**

इन शिष्यों में से महापूर्ण, श्री रंगनाथ के गायक वररंगजी, कांचोपूर्ण, मालाकार और गोष्ठीपूर्ण, ये प्रसिद्ध हुए। पूर्वोक्त सूरियों के अंश इन्हीं नामों से प्रसिद्ध हुए ।। ८५ ।।

स सम्यगेतानपरांश्च शिष्यान् साकं द्वयेनोपनिषद्रहस्यम् ।
अध्यापयद् द्रामिडमागमं च सुधावयस्याः स्वकृताः कृतीश्च ॥ ८६ ॥

श्री यामुनेय ने इन शिष्यों तथा अन्य शिष्यों को द्वय मंत्र के साथ उपनिषदों के रहस्य और द्राविड वेद पढ़ाया, एवं अपने विरचित ग्रंथ भी पढाया ॥ ८६ ॥

पितामहस्ते परिगृह्य चास्मान् किंचिद्रहस्यं कुरुकेशताते ।
न्यस्तं चकारेति स राममिश्र गिराऽऽप गंगाधरराजधानीम् ॥ ८७ ॥

पीछे एक दिन श्री राममिश्र ने वताया कि हम से भी छिपाकर आपके पितामह ने कुरुकेश में कुछ रहस्य स्थापित कर दिया था; उसे आप ले लें। यह सुनकर श्री यामुनेय गंगाधर राजधानी को पहुंचे ॥ ८७ ॥

स तत्र जीर्णालय कुडचभागे निविष्ट मारूढ समाधिभेदम् ।
विलोक्य तस्यावसरं प्रयित्सुः सहास्त पश्चान्निभृतं स्वशिष्यैः ॥ ८८ ॥

वहां कुरुकेश एक पुराने मकान की दीवारों की ओट में समाधि लगाके बैठे थे। यामुनेय इस प्रकार उन्हें बैठे देखकर मिलने का अवसर पाने के लिए अपने शिष्यों के साथ पीछे की ओर जा बैठ गए ॥ ८८ ॥

स योगनिष्ठः परिवृत्य पश्चात् को वाऽगमत्च्छोट्टैकुलोद्भवोऽत्र ।
इति ब्रुवाणं पदयोः प्रणम्य भक्त्येदमापृच्छत यामुनेयः ॥ ८९ ॥

योगिवर्य कुरुकेश ने पीछे मुड करके पूछा कि यहां शोट्टैक्कुल का कौन आया हुआ है? इतना सुनते ही यामुनेय ने भक्तिपूर्वक उनके चरणों में प्रणाम करके पूछा कि—॥ ८९ ॥

पश्चान्निविष्टं निभृतं कथं माम् अबुद्ध योगीति तमुक्तवन्तम् ।
तत्तस्य शोट्टैक्कुलजेतरेषाम् नानुग्रहोऽस्तीति ममैवमूचे ॥ ९० ॥

"में तो आप के पीछे बैठा हुआ था, आपने मुझे कैसे पहिचान लिया?" यह सुनकर योगिवर्य बोले कि शोट्टैकुल को छोड़ कर दूसरे परिवार पर मेरी चिंता नहीं होती ॥ ९० ॥

**उक्त्वैवमस्मै विनताय योगरहस्यविज्ञानसमुत्सुकाय ।**
**काले वदेयं चरमे ममेति तं प्राहिणोत्स्वान्तिम पत्रदानात् ॥ ९१ ॥**

ऐसा कहकर विनम्र भाव से खड़े हुए यामुनेय से, जो योग के रहस्य जानने में उत्सुक हो रहे थे, कुरुकेश ने कहा कि मैं अपने अन्तिम समय में आपको योग का रहस्य कहूंगा। ऐसा कहकर और अंतिम समय बतानेवाला पत्र देकर उनको विदा किया ॥ ९१ ॥

**पत्रं समादाय तदन्त्यकाल निरूपकं रंगगतोऽशृणोत्सः ।**
**रङ्गेन्द्रचग्रतो रंगि कुशीलवेश गोता मनन्तेशयकीर्ति गाथाम् ॥ ९२ ॥**

उस पत्र को लेकर श्री यामुनेय श्रीरंगक्षेत्र पहुंचे। वहां एक दिन उन्होंने श्रीरंगनाथ के सामने उनके गायक के मुख से एक गाथा सुनी, जिसमें श्री शठकोपसूरी अपने शिष्यों को श्रीमदनंतशयन क्षेत्र जाने की आज्ञा देते हैं ॥ ९२ ॥

**प्रायाद् यदाऽनन्तपुरे मुकुन्दं सिषेविषु स्सुप्तमनन्तभोगे ।**
**तदाऽवधिं पत्रमुखेन तस्य विलोक्य मध्येसरणि व्यषीदत् ॥ ९३ ॥**

जब ये शेषशय्या पर पौढ़े हुए भगवान् का सेवन करने के लिए अनन्तपुर को रवाना हुए, उस अवसर पर इन्हें रास्ते के बीच में पत्र से पता चला कि कुरुकेश का चरम समय आ पहुंचा और उस समय वहां पहुंचने में अपनी असमर्थता जानकर श्री यामुनेय को अत्यन्त क्लेश हुआ ॥ ९३ ॥

**अप्राप्य तद् योगरहस्यमार्तः समेत्य शिष्यैः सह रंगधाम ।**
**प्रवर्तको वैष्णवदर्शनस्य शिष्येषु कस्स्यादिति तेन मेने ॥ ९४ ॥**

